श्रीमद्विद्वद्वर्यश्रीविश्वनाथन्यायपञ्चाननप्रणीतवृत्तिसंयुतं

श्रीमन्महर्षिगौतमप्रणीतं

# न्यायदर्शनम् ।

मुजफ्फरपुरस्थ-राजकीयसंस्कृतपाठशालीयन्यायशास्त्राध्यापक-

श्रीमत्पण्डितप्रवरश्रीबालकृष्णमिश्र विरचित-

चतुःसूत्रीतात्पर्यविवृत्या च समेतम् ।

---

दयानन्दतीर्थापराभिधानेन वेदानन्दस्वामिना

संस्कृतम् ।

---

काशीस्थ-गुप्तबुकडिपो-स्वामिना

श्रीहरिकृष्णदासेन

निजव्ययतो मुद्रयित्वा प्रकाशितम् ।

सन् १९१९ ।

प्रदर्शितम् । संक्षेपेण-यथा छात्राणामधिको भवेदुपकारस्तथाऽत्र मया कृतम् ।

टिप्पण्यां तत्र तत्र सूत्रनिर्णयोपि कृतः। अस्ति सूत्रविषये महान् विवादो विदुषाम्—केचित्किंचिद्वाक्यं सूत्रत्वेनाङ्गीकुर्वन्ति, तदपरे-तत्प्रत्यवतिष्ठन्ते इति बहूनां सूत्राणां विषये विवादः । मया वार्तिक-तात्पर्य्यटीका-न्यायसूचनिबन्ध-न्यायसारप्रभृतिग्रन्थानवलोक्य यथ मति तत्रतत्र निर्णयःकृतः । वृत्तिकारेणानङ्गीकृतानां भाष्यकारेण वार्तिककारेण टीकाकृता वाऽङ्गीकृतानां सूत्राणां व्याख्या टिप्पण्यां निवेशिता। अन्ते च सूत्रभेदप्रदर्शकमेकं चक्रमपि संयोजितम् । मूल-पाठकर्त्तृणां सौकर्य्याय वृत्त्यनुसारी मूलपाठोपि निवेशितोऽत्र। विषयसूची-सूत्राणाञ्चाकारादिक्रमेण सूची इति सूचीद्वयमपि समयोजि । क्वचित् सीसाक्षरयोजकदोषाद् काश्चिदशुद्धयः सञ्जाताः तन्मार्जनाय शुद्धिपत्रमपि संयोजितम् ।

वृत्तिग्रन्थस्य काठिन्यमवलोक्य छात्रैर्भूयोभूयः संप्रार्थितैर्विद्वद्वरैः श्रीमत्पण्डितबालकृष्णमिश्रै रचितस्य तात्पर्यविवृत्तिनामकस्य व्याख्यानस्य चतुःसूचीभागेऽपि संनिवेशितः ।

कृतेऽपि महति प्रयासे मादृशाल्पविद्यसुलभप्रमादात्सीसाक्षर-योजकदोषाद्वाऽन्याः काश्चिदशुद्धयश्चेत्प्रतीयेरन्, ताःसंशोध्यैव-सुधियः पठन्तु पाठयन्तु इति मुहुर्मुहुः प्रार्थयते ।

विद्वदनुचरो

वेदानन्दः ।

अथ

श्रीमन्महर्षिमूर्धन्यभगवद्गौतमप्रणीतं

# न्यायदर्शनम् ।*

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥

दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ॥ २ ॥ १ ॥

प्रत्यक्षानुमानोपमानशब्दाः प्रमा-
३ ॥

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥

अथ तत्पूर्व्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टं च ॥५॥

प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम् ॥ ६ ॥

आप्तोपदेशः शब्दः ॥ ७ ॥

स द्विविधो दृष्टादृष्टार्थत्वात् ॥८॥
॥ २ ॥

आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥

इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् ॥१०॥

चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥११॥

घ्राणरसनचक्षुस्त्वक्छ्रोत्राणि इन्द्रियाणि भूतेभ्यः ॥१२॥

पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ॥१३॥

गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥१४॥

बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥१५॥

युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥१६॥

प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः ॥१७॥

प्रवर्त्तनालक्षणा दोषाः ॥१८॥

पुनरुत्पत्तिः प्रेत्यभावः ॥१९॥

प्रवृत्तिदोषजनितोऽर्थः फलम्॥२०॥

बाधनालक्षणं दुःखम् ॥२१॥

तदत्यन्तविमोक्षोऽपवर्गः ॥२२॥३॥

* विश्वनाथसम्मत एवं पाठोऽशोऽन्यतः ॥

समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥२३॥

यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनम् ॥२४॥

लौकिकपरीक्षकाणां यस्मिन्नर्थे साम्यं स दृष्टान्तः ॥२५॥४॥

तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥२६॥

सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥२७॥

सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥२८॥

समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ॥२९॥

यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥३०॥

अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥३१॥ ॥ ५ ॥

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥३२॥

साध्यनिर्देशः प्रतिज्ञा ॥३३॥

उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ॥३४॥

तथा वैधर्म्यात् ॥ ३५ ॥

साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ॥३६॥

तद्विपर्ययाद्वा विपरीतम् ॥३७॥

उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्य उपनयः ॥३८॥

हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥३९॥६॥

---

अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहः तर्कः ॥४०॥

विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥४१॥७॥

---

इति श्रीमन्महर्षिगौतमप्रणीते न्यायदर्शने प्रथमाध्यायस्य प्रथममाह्निकम् ।

[ सप्रयोजनाभिधेय—प्रमाणलक्षण—प्रमेयलक्षण—न्यायपूर्वाङ्ग—न्यायसिद्धान्त—न्यायस्वरूप—न्यायोत्तराङ्ग-प्रकरणानि सप्तात्राह्निके ]

---

प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥१॥

यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥२॥

सः प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥ १ ॥

---

सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः ॥ ४ ॥

अनैकान्तिकः सव्यभिचारः ॥५॥

सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ६ ॥

यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ७ ॥

साध्याविशिष्टस्साध्यत्वात् साध्यसमः ॥ ८ ॥

कालात्ययापदिष्टः कालातीतः ९ २॥

---

वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ १० ॥

तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥ ११ ॥

अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥ १२ ॥

सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् ॥ १३ ॥

धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ १४ ॥

वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ १५ ॥

न तदर्थान्तरभावात् ॥ १६ ॥

अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥ १७ ॥ ३ ॥

---

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥

विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ १९ ॥

तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥ ४ ॥

इति श्रीमन्महर्षिगौतमप्रणीते न्यायदर्शने प्रथमस्याध्यायस्य

कथा—हेत्वाभासः—छलं—दोषलक्षणं—चेति चत्वारि प्रकरणान्यत्राह्निके ॥

समाप्तोऽध्यायः प्रथमः ।

समानानेकधर्म्माध्यवसायादन्यतरधर्म्माध्यवसायाद्वा न संशयः ॥१॥

विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ॥२॥

विप्रतिपत्तौ च सम्प्रतिपत्तेः ॥३॥

अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ॥ ४ ॥

तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः ॥ ५ ॥

यथोक्ताध्यवसायादेव तद्विशेषापेक्षात्संशये नासंशयो नात्यन्तसंशयो वा ॥ ६ ॥

यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः ॥ ७ ॥ १ ॥

---

प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः ॥ ८ ॥

न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् ॥ १ ॥
शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानामनर्थान्तरभावाच्चाप्रतिषेधः ॥२॥
अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ३
अनर्थापत्तावर्थापत्त्यभिमानात् ॥४॥
प्रतिषेधाप्रामाण्यञ्चानैकान्तिकत्वात् ॥ ५ ॥
तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥
नाभावप्रामाण्यं प्रमेयासिद्धेः ॥७॥
लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेः ॥ ८ ॥
असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ॥ ९ ॥
तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥
न लक्षणावस्थितापेक्षसिद्धेः ॥ ११ ॥
प्रागुत्पत्तेरभावोपपत्तेश्च ॥१२॥१॥

---

आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ॥ १३ ॥
न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च ॥१४॥
तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः ॥ १५ ॥
सन्तानानुमानविशेषणात् ॥१६॥
कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वप्यव्यभिचार इति ॥ १७ ॥
प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेः ॥ १८ ॥
तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥ १९ ॥
अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात् ॥ २० ॥
अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २१ ॥
अस्पर्शत्वात् ॥ २२ ॥
न कर्मानित्यत्वात् ॥ २३ ॥
नाणु नित्यत्वात् ॥ २४ ॥
सम्प्रदानात् ॥ २५ ॥
तदन्तरालानुपलब्धेरहेतुः ॥२६॥
अध्यापनादप्रतिषेधः ॥ २७ ॥
उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥ २८ ॥
अभ्यासात् ॥ २९ ॥
नान्यत्वेऽप्यभ्यासस्योपचारात् ॥३०॥
अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभावः ॥ ३१ ॥
तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ॥ ३२ ॥
विनाशकारणानुपलब्धेः ॥ ३३ ॥
अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३४ ॥
उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥ ३५ ॥
पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३६ ॥
अस्पर्शत्वादप्रतिषेधः ॥ ३७ ॥
विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३८ ॥ २ ॥

विकारादेशोपदेशात् संशयः ॥३९॥

प्रकृतिविवृद्धौ विकारविवृद्धेः ॥४०॥

न्यूनसमाधिकोपपत्तेर्विकाराणामहेतुः ॥ ४१ ॥

नातुल्यप्रकृतीनां विकारविकल्पात् ॥ ४२ ॥

द्रव्यविकारे वैषम्यवद्वर्णविकारविकल्पः ॥४३॥

न विकारधर्मानुपपत्तेः ॥४४॥

विकारप्राप्तानामपुनरावृत्तेः ॥४५॥

सुवर्णादीनां पुनरापत्तेरहेतुः ॥४६॥

न तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥४७॥

नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ॥४८॥

नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ॥४९॥

अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः ॥५०॥

विकारधर्मित्वे नित्यत्वाभावात्कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥५१॥

प्रकृत्यनियमात् ॥५२॥

अनियमे नियमान्नानियमः ॥५३॥

नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥५४॥

गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः ॥५५॥३॥

ते विभक्त्यन्ताः पदम् ॥५६॥

तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः ॥५७॥

याशब्दसमूहत्यागपरिग्रहसङ्ख्यावृद्ध्युपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः ॥५८॥

न तदनवस्थानात् ॥५९॥

सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगंगाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ६०

आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः ॥६१॥

व्यक्त्याकृतियुक्तेऽप्यप्रसंगात्प्रोक्षणादीनां मृद्गवके जातिः ॥६२॥

नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥६३॥

व्यक्त्याकृतिजातयस्तु पदार्थः ॥६४॥

व्यक्ति र्गुणविशेषाश्रयो मूर्तिः ॥६५॥

आकृतिर्जातिलिंगाख्या ॥६६॥

समानप्रसवात्मिका जातिः ॥६७॥४॥

इति श्रीमन्महर्षिगौतमप्रणीते न्यायदर्शने द्वितीयाध्यायस्य

द्वितीयमाह्निकम् ॥

[ प्रमाणचतुष्टयं शब्दानित्यत्वं शब्दपरिणामः शब्दशक्तिपरीक्षा चेति अत्राह्निके चत्वारि प्रकरणानि ]

समाप्तोऽध्यायो द्वितीयः ।

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥१॥
न विषयव्यवस्थानात् ॥ २ ॥
तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥ १ ॥

---

शरीरदाहे पातकाभावात् ॥४॥
तदभावस्सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥
न कार्याश्रयकर्तृवधात् ॥६॥२॥

सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥७॥
नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥
एकविनाशे द्वितीयाविनाशात् ॥ ९ ॥
अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः ॥१०॥
दृष्टान्तविरोधादप्रतिषेधः ॥११॥
इन्द्रियान्तरविकारात् ॥१२॥
न स्मृतेस्स्मर्तव्यविषयत्वात् ॥१३॥
तदात्मगुणसद्भावादप्रतिषेधः ॥१४॥
अपरिसङ्ख्यानाच्च स्मृतिविषयस्य ॥१५॥३॥

---

नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ॥१६॥
ज्ञातुर्ज्ञानसाधनोपपत्तेस्संज्ञाभेदमात्रम् ॥१७॥
नियमश्च निरनुमानः ॥१८॥४॥

पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः ॥१९॥
पद्मादिषु प्रबोधसम्मीलनविकारवत्तद्विकारः ॥२०॥
नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥२१॥
प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ॥२२॥
अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् ॥२३॥
नान्यत्र प्रवृत्त्यभावात् ॥२४॥
वीतरागजन्मादर्शनात् ॥ २५ ॥
सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ॥२६॥
न सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥ २७ ॥ ५ ॥

---

पार्थिवं गुणान्तरोपलब्धेः ॥२८॥
पार्थिवाप्यतैजसं तद्गुणोपलब्धेः २९
निश्श्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ॥ ३० ॥
गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ॥ ३१ ॥
श्रुतिप्रामाण्याच्च ॥ ३२ ॥ ६ ॥

कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात् संशयः ॥३३॥
महदणुग्रहणात् ॥ ३४ ॥

रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणम् ॥ ३५ ॥

तदनुपलब्धेरहेतुः ॥ ३६ ॥

नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥ ३७ ॥

द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥ ३८ ॥

मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥ ३९ ॥

न रात्रावप्यनुपलब्धेः ॥ ४० ॥

बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥ ४१ ॥

अभिव्यक्तौ चाभिभवात् ॥ ४२ ॥

नक्तञ्चरनयनरश्मिदर्शनाच्च ॥ ४३ ॥

अप्राप्य ग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥ ४४ ॥

कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४५ ॥

अप्रतीघातात् सन्निकर्षोपपत्तिः ॥ ४६ ॥

आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात् ॥ ४७ ॥

नेतरेतरधर्मप्रसंगात् ॥ ४८ ॥

आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः ॥ ४९ ॥

दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः ॥ ५० ॥

स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ॥ ५१ ॥

त्वगव्यतिरेकात् ॥ ५२ ॥

न युगपदर्थानुपलब्धेः ॥ ५३ ॥

इन्द्रियार्थपञ्चत्वात् ॥ ५४ ॥

न तदर्थबहुत्वात् ॥ ५५ ॥

गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥ ५६ ॥

विषयत्वाव्यतिरेकादेकत्वम् ॥ ५७ ॥

न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ॥ ५८ ॥

भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ ५९ ॥ ८ ॥

---

गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः ॥ ६० ॥

अप्तेजोवायूनां पूर्वपूर्वमपोह्याकाशस्योत्तरः ॥ ६१ ॥

न सर्वगुणानुपलब्धेः ॥ ६२ ॥

एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः ॥ ६३ ॥

संसर्गाच्चानेकगुणग्रहणम् ॥ ६४ ॥

विष्टं ह्यपरं परेण ॥ ६५ ॥

न पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६६ ॥

पूर्वपूर्वगुणोत्कर्षात्तत्तत्प्रधानम् ॥ ६७ ॥

तद्व्यवस्थानन्तु भूयस्त्वात् ॥ ६८ ॥

सगुणानामिन्द्रियभावात् ॥ ६९ ॥

तेनैव तस्याग्रहणाच्च ॥ ७० ॥

न शब्दगुणोपलब्धेः ॥ ७१ ॥

तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७२ ॥ ॥ ९ ॥

इति श्रीमन्महर्षिगौतमप्रणीते न्यायदर्शने तृतीयाध्यायस्य प्रथममाह्निकम् ॥ २ ॥ १ ॥

[ इन्द्रियभेददेहभेदत्वनुरद्वैतमनोभेदज्ञानादिनित्यत्वशरीरपरीक्षेन्द्रियभौतिकत्वपरीक्षेन्द्रियनानात्वार्थपरीक्षारूपाणि नव प्रकरणान्यत्राह्निके । ]

---

कर्माकाशसाधर्म्यात्संशयः ॥१॥

विषयप्रत्यभिज्ञानात् ॥ २ ॥

साध्यसमत्वादहेतुः ॥ ३ ॥

युगपद्ग्रहणात् ॥ ४ ॥

अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥५॥

क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥६॥

अप्रत्यभिज्ञानञ्च विषयान्तरव्यासङ्गात् ॥ ७ ॥

न गत्यभावात् ॥ ८ ॥

स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः ॥ ९ ॥

न हेत्वभावात् ॥ १० ॥ १ ॥

---

स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ॥ ११ ॥

नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा ॥ १२ ॥

नोत्पत्तिविनाशकारणोपलब्धेः ॥ १३ ॥

क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुत्पत्तिः ॥१४॥

लिङ्गतो ग्रहणान्नानुपलब्धिः ॥१५॥

न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ १६ ॥

व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ॥१७॥

क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥१८॥२॥

नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥ १९ ॥

युगपज्ज्ञेयानुपलब्धेश्च न मनसः ॥ २० ॥

तदात्मगुणत्वेऽपि तुल्यम् ॥२१॥

इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः ॥ २२ ॥

नोत्पत्तिकारणानपदेशात् ॥ २३ ॥

विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ २४ ॥

अनित्यत्वग्रहाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥ २५ ॥

ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ २६ ॥

नान्तःशरीरवृत्तित्वान्मनसः ॥२७॥

साध्यत्वादहेतुः ॥ २८ ॥

स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २९ ॥

न तदाशुगतित्वान्मनसः ॥ ३० ॥

न स्मरणकालानियमात् ॥ ३१ ॥

आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः ॥ ३२ ॥

व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानः ॥ ३३ ॥

प्रणिधानलिङ्गादिज्ञानानामयुगपद्स्मरणम् ॥ ३४ ॥

ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भ-

तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवा-
द्येष्वप्रतिषेधः ॥ ३६ ॥
परश्वादिष्वारम्भनिवृत्तिदर्श-
नात् ॥ ३७ ॥
नियमानियमौ तु तद्विशेषकौ ॥३८॥
यथोक्तहेतुत्वात्पारतन्त्र्यादकृ-
ताभ्यागमाच्च न मनसः ॥३९॥
परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥४०॥
स्मरणन्त्वात्मनो ज्ञस्वाभाव्यात्॥४१
प्रणिधाननिबन्धाभ्यासलिङ्गल-
क्षणसादृश्यपरिग्रहाश्रयाश्रित-
सम्बन्धानन्तर्यवियोगैककार्य-
विरोधातिशयप्राप्तिव्यवधा-
नसुखदुःखेच्छाद्वेषभयार्थि-
त्वक्रियारागधर्माधर्मनिमि-
त्तेभ्यः ॥ ४२ ॥ ३ ॥

---

कर्मानवस्थायिग्रहणात् ॥४३॥
अव्यक्तग्रहणमनवस्थायित्वाद्विद्यु-
त्सम्पाते रूपाव्यक्तग्रहणवत्॥४४॥
हेतूपादानात्प्रतिषेद्धव्याभ्यनुज्ञा ४५
प्रदीपार्चिस्सन्तत्यभिव्यक्तग्रहण-
वत्तद्ग्रहणम् ॥ ४६ ॥ ४ ॥

---

द्रव्ये स्वगुणपरगुणोपलब्धेस्सं-
शयः ॥ ४७ ॥
यावच्छरीरभावित्वाद्रूपादीनाम्४८
न पाकजगुणान्तरोत्पत्तेः ॥ ४९ ॥
प्रतिद्वन्द्विसिद्धेः पाकजानामप्र-
तिषेधः ॥ ५० ॥
शरीरव्यापित्वात् ॥ ५१ ॥
न केशनखादिष्वनुपलब्धेः ॥५२॥
त्वक्पर्यन्तत्वाच्छरीरस्य केशन-
खादिष्वप्रसङ्गः ॥ ५३ ॥
शरीरगुणवैधर्म्यात् ॥ ५४ ॥
न रूपादीनामितरेतरवैधर्म्यात्॥५५
ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः
॥ ५६ ॥ ५ ॥

ज्ञानायौगपद्यादेकं मनः ॥ ५७ ॥
न युगपदनेकक्रियोपलब्धेः ॥५८॥
अलातचक्रदर्शनवत्तदुपलब्धिराशु
सञ्चारात् ॥ ५९ ॥
यथोक्तहेतुत्वाच्चाणु ॥ ६० ॥ ६ ॥

पूर्वकृतफलानुबन्धात्तदुत्पत्तिः॥६१
भूतेभ्यो मूर्त्युपादानवत्तदुपादा-
नम् ॥ ६२ ॥
न साध्यसमत्वात् ॥ ६३ ॥
नोत्पत्तिनिमित्तत्वान्मातापित्रोः६४
तथाऽऽहारस्य ॥ ६५ ॥
प्राप्तौ चानियमात् ॥ ६६ ॥
शरीरोत्पत्तिनिमित्तवत्संयोगोत्प-
त्तिनिमित्तं कर्म्म ॥ ६७ ॥
एतेनानियमः प्रत्युक्तः ॥ ६८ ॥
तददृष्टकारितमिति चेत् पुनस्त-
त्प्रसङ्गोऽपवर्गे ॥ ६९ ॥
मनःकर्म्मनिमित्तत्वाच्च संयोगानु-
च्छेदः ॥ ७० ॥
नित्यत्वप्रसंगश्च प्रायणानुप-
पत्तेः ॥ ७१ ॥
अणुश्यामतानित्यत्ववदेतत्स्यात् ॥७२॥
नाकृताभ्यागमप्रसंगात् ॥ ७३ ॥

इति श्रीमन्महर्षिगौतमप्रणीते न्यायदर्शने तृतीयाध्यायस्य
३ ॥ ॥ २

[ बुद्ध्यनित्यत्व क्षणभङ्गौ बुद्ध्यात्मगुणत्वं बुद्धेरुत्पन्नापवर्गित्वं बुद्धेः शरीरगुणभेदः मनःपरीक्षा शरीरस्यादृष्टनिष्पाद्यता चेति सप्तप्रकरणान्यत्राह्निके । ]

## समाप्तोऽध्यायस्तृतीयः ।

---

प्रवृत्तिर्यथोक्ता ॥ १ ॥
तथा दोषाः ॥ २ ॥ १ ॥

---

तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥
नैकप्रत्यनीकभावात् ॥ ४ ॥
व्यभिचारादहेतुः ॥ ५ ॥
तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः ॥ ६ ॥
प्राप्तस्तर्हि निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ॥७॥
न दोषलक्षणसंत्वान्मोहस्य ॥८॥
निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥९॥२॥

---

आत्मनित्यत्वे प्रेत्यभावसिद्धिः१०॥
व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥११॥
न घटाद्घटानिष्पत्तेः ॥१२॥
व्यक्ताद्घटनिष्पत्तेरप्रतिषेधः॥१३॥३

अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १४ ॥
व्याघातादप्रयोगः ॥ १५ ॥
नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥
न विनष्टेभ्योऽनिष्पत्तेः ॥ १७ ॥
क्रमनिर्देशादप्रतिषेधः ॥१८॥४॥

---

ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ॥ १९ ॥
न पुरुषकर्माभावे फलानिष्पत्तेः ॥ २० ॥
तत्कारितत्वादहेतुः ॥ २१ ॥ ५ ॥

---

अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ॥ २२ ॥
अनिमित्तनिमित्तत्वान्नानिमित्ततः ॥ २३ ॥
निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥ ६ ॥

---

सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥२५॥
नानित्यतानित्यत्वात् ॥ २६ ॥

विनाशवत् ॥ २७
नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ॥ २८ ॥ ७ ॥

---

सर्वं नित्यं पञ्चभूतनित्यत्वात् २९

नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥

तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥

नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥

न व्यवस्थानुपपत्तेः ॥ ३३ ॥ ८ ॥

---

सर्वं पृथग् भावलक्षणपृथक्त्वात् ॥ ३४ ॥

नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥

लक्षणव्यवस्थानादेवाप्रतिषेधः ३६

---

सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥ ३७ ॥

न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥

न स्वभावसिद्धिरापेक्षिकत्वात् ॥ ३९ ॥

व्याहतत्वादयुक्तम् ॥ ४० ॥ १० ॥

---

संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥ ४१ ॥

न कारणावयवभावात् ॥ ४२ ॥

निरवयवत्वादहेतुः ॥ ४३ ॥ ११ ॥

---

सद्यः कालान्तरे च फलनिष्पत्तेस्संशयः ॥ ४४ ॥

न सद्यः फलं कालान्तरोपभोग्यत्वात् ॥ ४५ ॥

कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥ ४६ ॥

प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात् ४७

नासन्न सन्न सदसत्सदसतोर्वैधर्म्यात् ॥ ४८ ॥

उत्पादव्ययदर्शनात् ॥ ४९ ॥

बुद्धिसिद्धन्तु तदसत् ॥ ५० ॥

आश्रयव्यतिरेकाद्वृक्षफलोत्पत्तिवदित्यहेतुः ॥ ५१ ॥

प्रीतेरात्माश्रयत्वादहेतुः ॥ ५२ ॥

न पुत्रस्त्रीपशुपरिच्छदहिरण्यान्नादिफलनिर्देशात् ॥ ५३ ॥

तत्सम्बन्धात्फलनिष्पत्तेस्तेषु फलवदुपचारः ॥ ५४ ॥ १२ ॥

---

विविधबाधनायोगाद्दुःखमेव जन्मोत्पत्तिः ॥ ५५ ॥

न सुखस्यान्तरालनिष्पत्तेः ॥ ५६ ॥

बाधनाऽनिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ॥ ५७ ॥

दुःखविकल्पे सुखाभिमानाच्च ॥ ५८ ॥ १३ ॥

---

ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५९ ॥

प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ॥ ६० ॥

समारोपणादात्मन्यप्रतिषेधः ॥ ६१ ॥

पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ६२ ॥

सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ॥ ६३ ॥

न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥ ६४ ॥

न क्लेशसन्ततेः स्वाभाविकत्वात् ॥ ६५ ॥

प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेऽप्यनित्यत्वम् ॥ ६६ ॥

अणुश्यामताऽनित्यत्ववद्वा ॥ ६७ ॥

न सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥ ६८ ॥ १४ ॥

इति श्रीमन्महर्षिगौतमप्रणीते न्यायदर्शने चतुर्थस्याध्यायस्य प्रथममाह्निकम् ॥ ४ ॥ १ ॥

**प्रवृत्तिदोषसामान्यपरीक्षा, दोषपरीक्षा, प्रेत्याभावपरीक्षा, शून्यतोपादाननिराकरणमीश्वरोपादानता, ऽकस्मिकत्वं, सर्वानित्यत्वनिराकरणं सर्वनित्यत्वनिराकरणं, सर्वपृथक्त्वनिराकरणं सर्वशून्यतानिराकरणं, संख्यैकान्तवादनिराकरणं, फलपरीक्षा दुःखपरीक्षाऽपवर्गपरीक्षा चेति चतुर्दशप्रकरणान्यस्मिन्नाह्निके ।**

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥ १ ॥

दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः ॥ २ ॥

तन्निमित्तं त्ववयव्यभिमानः ॥ ३ ॥ १ ॥

विद्याऽविद्याद्वैविध्यात्संशयः ॥ ४ ॥

तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥

वृत्त्यनुपपत्तेरपि तर्हि न संशयानुपपत्तिः ॥ ६ ॥

पृथक् चावयवेभ्योऽवृत्तेः ॥ ७ ॥

न चावयव्यवयवाः ॥ ८ ॥

एकस्मिन् भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ९ ॥

अवयवान्तरभावेऽप्यवृत्तेरहेतुः ॥ १० ॥

केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ॥ ११ ॥

स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥ १२ ॥

अवयवावयविप्रसङ्गश्चैवमाप्रलयात् ॥ १३ ॥

न प्रलयोऽणुसद्भावात् ॥ १४

परं वा त्रुटेः ॥ १५ ॥ २ ॥

आकाशव्यतिभेदात्तदनुपपत्तिः ॥ १६

आकाशासर्वगतत्वं वा ॥ १७ ॥

अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ॥ १८ ॥

शब्दसंयोगविभवाच्च सर्वगतम् ॥ १९ ॥

अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ॥ २० ॥

मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ॥ २१ ॥

संयोगोपपत्तेश्च ॥ २२ ॥

अनवस्थाकारित्वादनवस्थानुप- ॥ २३ ॥ ३ ॥

बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् ॥ २४ ॥

व्याहतत्वादहेतुः ॥ २५ ॥

तदाश्रयत्वादपृथग्ग्रहणम् ॥ २६ ॥

प्रमाणतश्चाऽर्थप्रतिपत्तेः ॥ २७ ॥

प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥२८॥
स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥२९॥
मायागन्धर्वनगरमृगतृष्णिकावद्वा ॥३०॥
हेत्वभावादसिद्धिः ॥ ३१ ॥
स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ॥ ३२ ॥
मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात्स्वप्नविषयाभिमानप्रणाशवत्प्रतिबोधे ॥ ३३ ॥
बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३४ ॥
तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ ३५ ॥ ४ ॥

अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥४०॥
अपवर्गेऽप्येवं प्रसङ्गः ॥ ४१ ॥
न निष्पन्नावश्यम्भावित्वात् ॥४२॥
तदभावश्चापवर्गे ॥ ४३ ॥
तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥४४॥
ज्ञानग्रहणाभ्यासस्तद्विद्यैस्सह संवादः ॥ ४५ ॥
तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयात् ॥ ४६ ॥
प्रतिपक्षहीनमपि वा प्रयोजनार्थित्वे ॥४७॥५॥

समाधिविशेषाभ्यासात् ॥३६॥
नार्थविशेषप्राबल्यात् ॥ ३७ ॥
क्षुदादिभिः प्रवर्त्तनाच्च ॥ ३८ ॥
पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥३९॥

तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥४८॥
ताभ्यां विगृह्य कथनम् ॥४९॥६॥

इति श्रीमन्महर्षिगौतमप्रणीते न्यायदर्शने चतुर्थस्याध्यायस्य द्वितीयमाह्निकम् ॥ ४ ॥ २ ॥

। तत्त्वज्ञानोत्पत्त्यवयवावयविनिरवयवबाह्यार्थभङ्गनिराकरणतत्त्वज्ञानविवृद्धितत्त्वज्ञानपरिपालनानि षट्प्रकरणान्यत्राह्निके। ।

॥ समाप्तोऽध्यायश्चतुर्थः ॥

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमाः ॥ १ ॥
साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्म्मविपर्य्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥ २ ॥
गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥३॥१

साध्यदृष्टान्तयोर्धर्म्मविकल्पादुभयसाध्यत्वाच्च उत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥४

किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ ५ ॥
साध्यातिदेशाच्च दृष्टान्तोपपत्तेः॥६॥२

---

प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥७॥
घटादिनिष्पत्तिदर्शनात्पीडने चाभिचारादप्रतिषेधः ॥ ८ ॥३॥

---

दृष्टान्तस्य कारणानपदेशात्प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥
प्रदीपोपादानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः ॥ १० ॥
प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ ॥ ४ ॥

---

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥१२॥
तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥१३॥५॥

---

सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः । १४॥
साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥ ६ ॥

उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमः ॥ १६ ॥
प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः॥१७॥७॥

---

त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥१८॥
न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥१९॥
प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥ ८ ॥
अर्थापत्तितः प्रतिपक्षसिद्धेः अर्थापत्तिसमः ॥ २१ ॥
अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तेरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥२२॥ ९ ॥

---

एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः ॥ २३ ॥
क्वचित्तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः ॥२४॥ १० ॥

उभयकारणोपपत्तेः उपपत्तिसमः२५
उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥ ११ ॥

---

निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥२७॥
कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥ २८ ॥ १२ ॥

तदनुलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥ २९ ॥

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ३० ॥

ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥३१॥१३॥

साधर्म्यात्तुल्यधर्मोपपत्तेस्सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥३२॥

साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात् ॥३३॥

दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथा भावान्नाविशेषः ॥३४॥१४॥

---

नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः नित्यसमः ॥३५॥

प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः ॥ ३६ ॥ १५ ॥

---

प्रयत्नकार्य्यानेकत्वात् कार्य्यसमः ॥ ३७ ॥

कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥३८॥१६॥

प्रतिषेधेऽपि समानो दोषः ॥३९॥

सर्वत्रैवम् ॥ ४० ॥

प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥

प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥४२॥

स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः ॥४३॥ १७ ॥

इति श्रीमन्महर्षिगौतमप्रणीते न्यायदर्शने पञ्चमस्याध्यायस्य प्रथममाह्निकम् ॥ ५ ॥ १ ॥

[ सत्प्रतिपक्षदेशनाभास–जातिषट्क–प्राप्त्यप्राप्तिसमजाति–कथेत्यादीनि सप्तदशप्रकरणान्यत्राह्निके ]

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्य्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥१॥

प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥

प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥३॥

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥

पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ॥ ५ ॥

अविशेषोक्ते हेतौ प्रतिषिद्धे विशे-

षमिच्छतो हेत्वन्तरम् ॥६॥१॥

---

प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् ॥ ७ ॥

वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८॥

परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥९॥

पौर्व्वापर्य्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ॥ १० ॥ २ ॥

अवयवविपर्य्यासवचनमप्राप्तकालम् ॥११॥

हीनमन्यतमेनाप्यवयवेन न्यूनम् १२

हेतूदाहरणाधिकमधिकम् ॥ १३ ॥ ३ ॥

---

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥

अर्थादापन्नस्य स्वशब्देन पुनरभिधानम् ॥ १५ ॥ ४ ॥

विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ॥ १६ ॥

तदज्ञानम् ॥ १७ ॥

उत्तरस्याप्रतिपत्तिरप्रतिभा ॥१८॥

कार्य्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ॥ १९ ॥ ५ ॥

स्वपक्षे दोषाभ्युपगमात्परपक्षे दो- [illegible] २० ॥

निग्रहस्थानप्राप्तस्यानिग्रहः पर्य्यनुयोज्योपे[illegible]

अनिग्रहस्थाने [illegible]स्थानाभियोगो [illegible]ज्यानुयोगः ॥ २२ ॥ ६ ॥

सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तः ॥२३॥

हेत्वाभासाश्च यथोक्ताः ॥२४॥७॥

---

इति श्रीमन्महर्षिगौतमप्रणीते न्यायदर्शने पञ्चमस्याध्यायस्य द्वितीयमाह्निकम् ॥ ५ ॥ २ ॥

न्यायाश्रितनिग्रहस्थानपञ्चकं अभिमतवाक्यार्थप्रतिपादकनिग्रहस्थानचतुष्कं स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकं निग्रहस्थानविशेषाश्च चत्वारि प्रकरणान्यत्राह्निके ॥

॥ इति पञ्चमोऽध्यायः समाप्तः ॥

समाप्तञ्चेदं न्यायदर्शनं ।

# विषय-सूची

| विषय | पृष्ठत | पृष्ठपर्य्यन्तम् |
|---|---|---|

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तिः |
|---|---|---|---|
| भूषाविशेषाम् | ···विशेषम् | १ | १२ |
| प्रवर्तन्तो | प्रवर्तन्ते | २ | ३ |
| ज्ञानन्निः | ज्ञानाग्निः | २ | १२ |
| प्रमाणनि | प्रमाणानि | २ | २१ |
| खदिश्च | खदिरश्च | ३ | ३ |
| न्यायाङ्गममपि | न्यायाङ्गमपि | ३ | २० |
| ···दृन्तर | ···दनन्तर | ४ | २ |
| प्रमाणश्द | प्रमाणशब्द | ४ | २४ |
| ···ज्ञावर्गः | ···ज्ञापवर्गः | ६ | ४ |
| व्यववसायात्मकमिति | व्यवसायात्मकमिति | ७ | ६ |
| वह्लनिमान् | वह्निमान् | ७ | १३ |
| अन्यतामाज्ञाने | अन्यतमाज्ञाने | ९ | ८ |
| वह्निरिन्द्रिया- | वह्निरिन्द्रियग्र - | ११ | १४ |
| एवमव्यख्याने | एवमव्याख्याने | १२ | ५ |
| साधानाय | साधनाय | १२ | ६ |
| अज्ञापनाय | अयज्ञापनाय | १२ | २३ |
| संनिविष्टः | सन्निवेशितः | १२ | २६ |
| ···पक्ष्थाकश्शब्दः | ···पक्ष्थापकश्शब्दः | १४ | १५ |
| ···कृत्वेन··· | ···कृतत्वेन··· | १८ | ११ |
| ती | तीति | १८ | २१ |
| धूर्म | धूमः | २१ | ६ |
| त्रैषिध्यम् | त्रैविध्यम् | २१ | ३० |
| विज्ञातार्थदे | विज्ञातार्थादि | २३ | २२ |
| अनापेक्षका | अनपेक्षका | २३ | २८ |
| नावश्यकी | नावशियकी | २३ | ३१ |
| लक्षति | लक्षयति | २४ | १ |
| दूषणाद्भावेन | दूषणोद्भावेन | २५ | १ |

| अशुद्धम् | शुद्धम् | पृष्ठ | पंक्तिः |
|---|---|---|---|
| कालातीशब्दे- | कालातीतशब्दे- | २८ | १५ |
| ऽपरप्रत्ववस्था | ऽपरप्रत्ययवस्थाने | ३१ | ६ |
| तद्विकल्पाज्ञाजि | तद्विकल्पाज्ज्ञाति | ३१ | २१ |
| शिष्याजिज्ञासा | शिष्यजिज्ञासा | ३२ | ४ |
| धर्माध्यवासाया | धर्माध्यवसाया | ३२ | १३ |
| संश | संशय | ३१ | २६ |
| ···वसायाश्च | ···वसायाच्च | ३३ | २ |
| प्रमाण्य | प्रामाण्य | ३३ | १६ |
| कवत्रृत्तित्वं | क्रमवृत्तित्वं | ३५ | २० |
| प्रतिषेषसिद्धि | प्रतिषेधसिद्धि | ३५ | २८ |
| कारणकत्व | कारणत्व | ३६ | ६ |
| सुतव्वासक्त | सुतव्यासक्त | ३६ | २५ |
| द्रव्वे | द्रव्ये | ४२ | ७ |
| आतीन्द्रि | अतीन्द्रि | ४२ | ७ |
| मिति | नामिति | ४५ | ६ |
| ···पत्तेस्तु | ···पत्तेस्तू | ४५ | १० |
| परीरित्ततुं | परीक्षितुं | ४५ | १५ |
| संप्रत्यः | संप्रत्ययः | ४७ | १६ |
| नोपा··· | नोपया··· | ५३ | १७ |
| वैधाधि··· | वैयधि··· | ५३ | १८ |
| ···दिर्थः | ···दित्यर्थः | ५७ | १० |
| ···व्यापप··· | ···व्यापन्न | ६१ | १० |
| तेद्भावे | तद्भावे | ६२ | १० |
| ऊक्तः | उक्तः | ६३ | १५ |
| कारणा··· | काराणा··· | ६५ | ८ |
| ···राणामाप्रतिषेधः | ···राणामप्रतिषेधः | ६७ | ७ |
| वर्णोल··· | वर्णोपल··· | ६७ | १४ |
| प्रतिषधः | प्रतिषेधः | ६७ | १६ |
| वर्णविकारणम् | वर्णविकाराणाम् | ६८ | ८ |
| व्यक्ताद्युपचारद्भ | व्याकाद्युपचाराद्भ | ६८ | २६ |

| | शुद्धम् | पृष्ठ | पंक्तिः |
|---|---|---|---|
| शट | शाट | ७० | १५ |
| परिहरिति | परिहरति | ७६ | ६ |
| पूर्वाभ्मस्त | पूर्वाभ्यस्त | ७८ | १८ |
| पद्मादीनां | पद्मादीनां | ७९ | ८ |
| प्रवृत्त्याभावात् | प्रवृत्त्यभावात् | ८० | २ |
| रागादिनाम् | रागादीनाम् | ८१ | ७ |
| जलविशेशो | जलविशेषो | ८१ | २४ |
| लब्धित् | लब्धिवत् | ८५ | ४ |
| प्रतिघातत्वं | प्रतिघातत्वं | ८८ | १२ |
| गुत्वेऽपि | गुणत्वेऽपि | १०३ | ८ |
| जन्यताम··· | जायताम··· | ११७ | ६ |
| मोहाः | मोहः | १२२ | २० |
| प्रत्यभाव | प्रेत्यभाव | १२३ | १७ |
| पुरुकर्माभावे | पुरुषकर्माभावे | १२६ | ४ |
| पुरुषोभाग | पुरुषोपभोग | १२६ | २५ |
| ग्रन्थान्ते | ग्रन्थे | १२६ | २९ |
| परिशिष्टे | ··· | १२९ | ३० |
| संख्येकान्ता | संख्यैकान्ता | १३३ | २६ |
| रागाद्यो | रागादयो | १४४ | ४ |
| स्वाप्रत्ययस्या | स्वाप्रप्रत्ययस्या | १५२ | १९ |
| ···रेणाऽविद्य··· | ··रेणाऽविद्य··· | १६० | ५ |

तृतीयपृष्ठस्य ११ पंक्तौ "आह्निकं तु" इत्यस्याग्र "तादृशप्रकरण-समष्टः, प्रकरणान्त" इति पाठः अपेक्ष्यते।

श्रोंनमः परमात्मने ।

# न्यायसूत्रम्

## महर्षि-गोतम-प्रणीतम्

### श्रीविश्वनाथन्यायपञ्चाननविरचित-वृत्तिसहितम् ।

वपुर्लीलालक्ष्मीजितमदनकोटिर्व्रजवधू-
र्जनानामानन्दं कमपि कमनीयं विरचयन् ।
स कोऽपि प्रेमाणं प्रथयतु मनोमन्दिरचर-
स्त्रिलोकीलोकानां सजलजलदश्यामलतनुः ॥ १ ॥
संयुक्तां युक्तरूपामभिनवनिहितालक्तकारक्तभासाम्
सन्ध्यापीयूषभानोरतिरुचिरतरां चूर्णयन्तीमभिख्याम् ।
नानाव्यामोकनम्रत्रिपुरहरशिरोरम्यभूषाविशेषाम्
भूयो भव्यं विधातुं चरणनखरुचं भावयामो भवान्याः ॥ २ ॥
यदीयतर्ककिरणैरान्तरध्वान्तसन्ततिम् ।
सन्तस्तरन्ति भास्वन्तमक्षपादं नमामि तम् ॥ ३ ॥
अद्वैतं गुरुधर्मयोरिव लसत्क्ष्मामण्डलीमण्डनम्
रूपं किञ्चन पौरुषं गिर इव प्रागल्भ्यसम्पादकम् ।
दाने कर्णमिवावतीर्णमपरं दीने दयादक्षिणम्
तातं विश्वविसारिचारुयशसं विद्यानिवासं नुमः ॥ ४ ॥
अलसमतिरपीदं विस्तृतं न्यायशास्त्रं
विरहितबहुयत्नो लीलया वेत्तु विज्ञः
इति विनिहितचेताः कौशलं कर्तुकामो
गुरुचरणरजोऽहं कर्णधारीकरोमि ॥ ५ ॥

विद्यानिवाससूनोः कृतिरेषा विश्वनाथस्य ।
विदुषामतिसूक्ष्मधियाममत्सराणां मुदे भवतु ॥ ६ ॥

प्रयोजनमनभिसन्धाय प्रेक्षावन्तो न प्रवर्तन्तोऽतः प्रथमं प्रयोजनमभिधानीयं; तथा चाहुः—

सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥ इति ( मी० श्लोकवा० १।१।१।७ )

सिद्धो=ज्ञातो, अर्थः=प्रयोजनम्, यस्य तत्तथा, एवं सिद्धसम्बन्धमित्यपि; अतस्तत्प्रतिपादनाय भगवानक्षपादः प्रथमं सूत्रयति—

**प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥१॥**

अत्र तत्त्वज्ञाननिःश्रेयसयोः शास्त्रतत्त्वज्ञानयोश्च हेतुहेतुमद्भावः, प्रमाणादितत्त्वज्ञानयोर्विषयविषयीभावः, प्रमाणादिशास्त्रयोः प्रतिपाद्यप्रतिपादकभावः, शास्त्रनिःश्रेयसयोश्च प्रयोज्यप्रयोजकभावः सम्बन्धः । तत्त्वं ज्ञायतेऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं=शास्त्रं; तथा च शास्त्रनिःश्रेयसयोरपि तत्त्वज्ञानद्वारकहेतुहेतुमद्भाव एव सम्बन्ध इति सम्प्रदायविदः । अत्र च सर्वपदार्थप्रधानो द्वन्द्वः समासः । यद्यपि भेदे द्वन्द्वविधानादत्र च बहूनां पदार्थानामभेदान्न द्वन्द्वसम्भवस्तथापि पदार्थतावच्छेदकभेदेन द्वन्द्व इति न दोष इत्यन्यत्र विस्तरः। तत्र च निर्देशे यथावचनं विग्रह इति यथाश्रुतभाष्यानुसारिणः प्रमाणानि च प्रमेयं च संशयश्च प्रयोजनं च दृष्टान्तश्च सिद्धान्तश्च अवयवाश्च तर्कश्च निर्णयश्च वादश्च जल्पश्च वितण्डा च हेत्वाभासाश्च छलं च जातयश्च निग्रहस्थानानि चेति विग्रहं वर्णयन्ति । सम्प्रदायविदस्तु भाष्यस्थवचनपदेन क्वचित्सौत्रं क्वचिदार्थं च वचनं गृह्यते, तत्र प्रमाणे प्रमेये च सौत्रं वचनं गृह्यते सप्रयोजनत्वात, तच्च वक्ष्यते, न तु दृष्टान्तादावेकवचनं सप्रयोजनं, तथा च दृष्टान्ते द्विवचनम्, अन्वयिव्यतिरेकिभेदेन दृष्टान्तद्वैविध्यस्य वक्ष्यमाणत्वात्, संशये सिद्धान्ते छले च बहुवचनं, संशये छले च त्रैविध्यस्य सिद्धांते च चातुर्विध्यस्य वक्ष्यमाणत्वात्, अन्यथा जातिनिग्रहस्थानयोर्बहुवचनं तत्रापि व्याहन्येत, एकवचनस्यैव

लक्षणसूत्रे सत्त्वादिति वदन्ति। नव्यास्तु सर्वत्र प्रथमोपस्थितैकवचनेनैव विग्रहः,न ह्यत्र बहुवचनेनैव प्रमाणादीनां* चतुष्ट्वं परिच्छिद्यते, किन्त्वामाग्रिमविभागेन; न ह्येकद्वित्रिधवखदिरादौ धवश्च खदिरश्च पलाशश्चेति न विगृह्यते; अत एव प्रयोजनस्यैकवचनान्तत्वेपि तद्विभागाकरणेपि सुखदुःखाभावतत्साधनभेदेन तस्य बहुत्वं न विरुध्यत इति प्राहुः। अत्र च निःश्रेयसे सिद्धे घटादिवत्तत्प्राप्तये न प्रयत्नान्तरमपेक्षितमिति प्रतिपादनायाधिगमपदम्। ननु प्रमाणादयः पदार्था इति शब्दात् प्रथमसूत्रादेव वा तत्त्वज्ञानं स्यादिति चेत्, न, तेषां विशिष्य ज्ञानं हि तत्त्वज्ञानं, तच्चोद्देशलक्षणपरीक्षाप्रकाशकाच्छास्त्रादेव। शास्त्रं हि विशिष्टानुपूर्वीका पञ्चाध्यायी, अध्यायस्त्वाह्निकसमूहः, आह्निकं तु तादृशवाक्यसमूहः, वाक्यं तु तादृशपदसमूह इति वदन्ति। अत्र समूहशब्देनानेकत्वं विवक्षितं, तेनाध्यायादेराह्निकादिद्वयात्मकत्वेपि न क्षतिः। अत्र च यद्यपि मोक्षजनकज्ञानविषयत्वेन प्रमेयमेवादौ निरूपयितुमर्हं, तथापि प्रमाणस्य सकलपदार्थव्यवस्थापकत्वेन प्राधान्यात् प्रथममुद्देशः, ततोऽवसरतो बुभुत्सितप्रमेयस्य, ततश्च पदार्थव्यवस्थापनस्य न्यायाधीनतया न्याये निरूपणीयेऽभ्यर्हितयोर्न्यायपूर्वाङ्गयोः संशयप्रयोजनयोः, तत्रापि अभ्यर्हिततया संशयस्य प्रथमम्। न च निर्णीतेपि मननविधानान्न संशयस्य न्यायाङ्गत्वमिति वाच्यम्, † आहार्यसंशयोपगमात्। यद्यपि प्रयोजनं न न्यायाङ्गमपि तु तज्ज्ञानं, तथापि तदेव निरूपणीयं न तु ज्ञाननिरूपणापेक्षेति, परप्रत्यायने दृष्टान्तस्य मूलत्वादनन्तरं दृष्टान्तस्य, दृष्टान्तमूलको न्यायः सिद्धान्तविषय इत्यतोनन्तरं सिद्धान्तस्य, ततश्चावसरतः सिद्धान्ताधीनस्य पञ्चावयवरूपस्य न्यायस्य, ततश्चैककार्यतया न्यायसहंकारिणस्तर्कस्य, ततश्च तर्कजन्यतया निर्णयस्य, ततश्च निर्णयानुकूलत्वाद्वादस्य, जल्पस्यापि वादकार्यकारित्वादनन्तरं जल्पस्य, ततश्च विजयरूपैककार्यानुकूलतया वितण्डायाः, ‡कथात्रयस्यापि दूषणसापेक्षतयाऽनन्तरं दूषणेषु निरूपणीयेषु वादे दैशनीयत्वरूपोत्कर्षवत्त्वाद्धेतुवदाभासमानत्वाच्चादौ हेत्वाभासानां,

* बहुत्वमिति पाठान्तरम्।

† बाधकालीनेच्छाजन्यं ज्ञानं आहार्यम् इति।

‡ वादजल्पवितण्डा एव कथात्रयमिति।

ततश्च हेत्वाभासोपजीवनेन छलस्य, स्वव्याघातकत्वेनात्यन्तासदुत्तरत्वात् ततो जातेः, कथावसानत्वेनार्थादन्तरं निग्रहस्थानानामिति। अत्र च प्रमेयान्तःपातिबुद्धिरूपस्यापि संशयादेर्निरनुयोज्यानुयोगरूपनिग्रहस्थानान्तःपातिनोः छलजात्योश्च प्रकारभेदेन प्रतिपादनं शिष्यबुद्धिवैशद्यार्थमस्तु। निग्रस्थानान्तःपातिनां हेत्वाभासानां पृथगभिधानप्रयोजनं तु जानाति भगवानक्षपाद एव। भाष्ये तु 'वादे देशनीयतया हेत्वाभासानां पृथगुपन्यास' इत्युक्तम्। अत्र वार्त्तिकं-यदि वादे देशनीयत्वात्पृथगभिधान, तदा न्यूनाधिकापसिद्धान्तानां वादे देशनीयत्वात् पृथगभिधानं स्यात्, यदि पृथगभिधानाद्वादे देशनीयत्वं, तदा संशयादीनामपि वादे देशनीयत्वं स्यात्। तस्मादान्वीक्षिकीत्रयीवार्तादण्डनीतिरूपविद्याप्रस्थानप्रभेदज्ञापनार्थं संशयादेर्हेत्वाभासस्य च पृथग्वचनमिति, तदप्यसत् निग्रहस्थानान्तर्गतत्वेनैव तन्निरूपणेन प्रस्थानभेदसंभवात्। वयं तु हेत्वाभासानां न निग्रहस्थानत्वं, तथा सति सर्वत्र हेत्वाभाससत्त्वात् सर्वस्यैव निगृहीतत्वापत्तेः, तस्माद्धेत्वाभासप्रयोगो निग्रहस्थानं, *तद्विभाजकसूत्रस्थहेत्वाभासपदं च तत्प्रयोगपरं, तत्र च प्रयोगस्य न लक्षणमपेक्षणीयमपितु हेत्वाभासानामित्यत उक्तं "हेत्वाभासाश्च यथोक्ताः" इति चरमसूत्रम्; न च हेत्वाभासस्यावच्छेदकप्रवेशादेव न पृथङ्निरूपणापेक्षेति वाच्यम्; तथा सति प्रमाणतर्कसाधनोपालम्भ इति वादाद्व्यवच्छेदकप्रमाणादेरपि पृथङ्निरूपणानापत्तिरिति युक्तमुत्पश्यामः। अत्र केचित्सूत्रादौ मङ्गलाकरणेन मङ्गलं न प्रामाणिकमित्यत्र सूत्रकृतां तात्पर्यं वर्णयन्ति, तदसत् कृतस्याप्यनिबन्धनसंभवात् विघ्नाभावनिर्णयेनाकरणसंभवाच्च। वयं तु 'प्रमाणं प्रमाणनिलय इति भगवन्नामगणान्तःपातिप्रमाणशब्दस्योच्चारणमेव मङ्गलमिति ब्रूमः। अत्र † चोद्देशलक्षणपरीक्षाणां पूर्वपूर्वसापेक्षतया प्रथममुद्देशोऽनन्तरं लक्षणं प्रसङ्गाच्छलपरीक्षेति सोद्देशपदार्थलक्षणच्छलपरीक्षा प्रथमाध्यायार्थः। तत्र च सपरिकरन्याय-

* तद्विभाजकसूत्रं = निग्रहस्थानविभाजकसूत्रं, तत्तु "प्रतिज्ञाहानिः प्रतिज्ञान्तर ००० हेत्वाभासाश्च निग्रहस्थानानि" (५-२-१) इति ॥

† नामधेयेन पदार्थमात्रस्याभिधानमुद्देशः, उद्दिष्टस्यातत्त्वव्यवच्छेदको धर्मो लक्षणम्, लक्षितस्य यथालक्षणमुपपद्यते नवेति विचारः परीक्षा इति ॥

लक्षणं प्रथमाह्निकार्थः। तत्र च (१) सप्रयोजनाभिधेयप्रतिपादकं प्रथमद्वितीयसूत्राभ्यामेकं प्रकरणम्। ततः (२) प्रमाणलक्षणं, ततः (३) प्रमेयलक्षणप्रकरणं, ततो (४) न्यायपूर्वाङ्गप्रकरणं, ततो (५) न्यायाश्रयसिद्धान्तप्रकरणं ततो (६) न्यायस्वरूपप्रकरणं, ततो (७) न्यायोत्तराङ्गप्रकरणमिति प्रथमाह्निके सप्तप्रकरणानि। श्रवणाद् अनु=पश्चात् ईक्षा, अन्वीक्षा=मननं, तन्निर्वाहिका सेयमान्वीक्षिकी न्यायतर्कादिशब्दैरपि व्यवह्रियते, तथा च "न्यायो मीमांसा धर्मशास्त्राणि' इति श्रुतिः। पुराणन्यायमीमांसेत्यादिस्मृतिः। 'मीमांसा न्यायतर्कश्च उपाङ्गः परिकीर्तितः' इति पुराणम्। "त्रैविद्येभ्यस्त्रयीविद्यां दण्डनीतिं च शाश्वतीम्। आन्वीक्षिकीं चात्मविद्यां वार्त्तारम्भांश्च लोकतः" ॥ इति मनुः। तथा 'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" इत्यादि। मोक्षधर्मे "तत्रोपनिषदं तावत् परिशेषं च पार्थिव। मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम् ॥" इत्युपनिषदर्थश्च आन्वीक्षिक्यनुसारी ग्राह्य इत्युक्तमिति ॥ १ ॥

ननु न तत्त्वज्ञानस्य साक्षादेव निःश्रेयसहेतुत्वं तत्त्वज्ञानिनामव्यवस्थितिदर्शनादतः क्रमाकाङ्क्षायामाह—

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्त*रापायादपवर्गः ॥ २ ॥**

निःश्रेयसं तावद् द्विविधं परापरभेदात्, तत्रापरं जीवन्मुक्तिलक्षणं तत्त्वज्ञानानन्तरमेव, तदप्यवधारितात्मतत्त्वस्य नैरन्तर्याभ्यासापहतमिथ्याज्ञानस्य प्रारब्धं कर्म उपभुञ्जानस्य, परन्तु क्रमेण, तत्र क्रमप्रतिपादनायेदं सूत्रमिति। दुःखादीनां मध्ये यदुत्तरोत्तरं, तेषामपाये तदनन्तरस्य=तत्सन्निहितस्य पूर्वपूर्वस्यापायादपवर्गः। प्रयोजकत्वं प्रयोज्यत्वं वा पञ्चम्यर्थः, दण्डाभावाद् घटाभाव इतिवत्स्वरूपसम्बन्धविशेष एव तत्। तदयमर्थः—तत्त्वज्ञानेन विरोधितयापहते मिथ्याज्ञाने, कारणाभावाच्च निवृत्ते रागद्वेषात्मके दोषे, तदभावाच्च प्रवृत्तेर्धर्माधर्मात्मिकाया अनुत्पत्तौ, तदभावाच्च जन्मनो=विशिष्टशरीरसम्बन्धस्य अभावाद् दुःखाभावादपवर्गः। यद्यपि ज्ञानिनोऽपि रागादयस्तिष्ठन्ति, तथाप्युत्कटरागाद्यभावे तात्पर्यम्। यद्यपि दोषाणां धर्मादिजनकत्वं, तथापि तत्तद्दोषाणां तत्तद्धर्मादिहेतुत्वाद्दोषापाये

* रागाभावाद० इति स्वाभिमतपाठः।

धर्माद्यपायः। वस्तुतो विनापीच्छां गङ्गाजलसंयोगादितो धर्मादिसंभवाद् व्यभिचारः; तस्मान्मिथ्याज्ञानजन्यवासनैवात्र दोषः, तस्याश्च मिथ्याज्ञाननाशात् तत्कालीनतत्त्वज्ञानजन्यवासनातो वा नाश इत्यपि वदन्ति। यद्यपि दुःखापायोऽपवर्गः, किन्तु स एव सः, तथाप्यभेद एव तत्र पञ्चम्यर्थः। अपवर्गपदं वा तद्व्यवहारपरम्, अनन्तरपदेन जन्मान्तरमेव परामृश्यत इति तु न व्याख्यानं दुःखपदवैयर्थ्यापत्तेः, दुःखानुत्पत्तेश्चरमदुःखध्वंसप्रयोजकत्वं कल्प्यत इत्याशयेनेदमित्यपि कश्चित्॥ २॥

इति न्यायसूत्रवृत्तौ सप्रयोजनाभिधेयप्रकरणम्॥१॥

अथ यथोद्देशं लक्षणस्यापेक्षितत्वात् प्रथमोद्दिष्टं प्रमाणं लक्षयति विभजते च—

**प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि॥ ३॥**

अत्र तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानं 'प्र'शब्दविशिष्टेन 'मा'धातुना प्रत्याय्यते तत्करणत्वं प्रमाणत्वं, ज्ञानं चात्रानुभवो विवक्षितस्तेन स्मृतिकरणे नातिव्याप्तिः। लक्षितानां प्रमाणानां विभागः—'प्रत्यक्षानुमानोपमानशब्दा' इति विभागस्योद्देश एवान्तर्भूतत्वादयं विशेषोद्देशः। प्रत्येकलक्षणं तु वक्ष्यते॥ ३॥

इति त्रिसूत्रीवृत्तिः समाप्ता।

अथ विभक्तानि यथाक्रमं लक्षयितुमारभते—

**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्॥ ४॥**

अत्र प्रतिगतमक्षं प्रत्यक्षमिति योगादिन्द्रियवाचकत्वात् प्रत्यक्षशब्दस्य, प्रस्तुतत्वाच्च करणलक्षणस्य, प्रमितिलक्षणं यद्यप्यनुचितं; तथापि 'यत' इत्यध्याहारेण प्रत्यक्षप्रमाकरणलक्षणे वाच्ये तदेकदेशप्रमास्वरूपे ज्ञाते तत्करणत्वं सुज्ञेयमित्याशयेन वा सङ्गमनीयम्। आत्ममनःसंयोगजन्यसुखादिवारणाय ज्ञानमिति। यद्यपि तज्जन्यत्वाज्ज्ञानमात्रेऽतिव्याप्तिरीश्वरप्रत्यक्षे चाव्याप्तिस्तथापि साक्षात्करोमीत्यनुव्यवसायसिद्धसाक्षात्त्वजात्यवच्छिन्नं ज्ञानमित्यन्तस्य तात्पर्यं,

यद्वा * इन्द्रियार्थसन्निकर्षोत्पन्नमिति सावधारणम्' अर्थात् इन्द्रियार्थसन्निकर्षातिरिक्तादनुत्पन्नम्, अतिरिक्तं चात्र ज्ञानं, तेन ज्ञानाकरणकमित्यर्थः। भ्रमवारकंअव्यभिचारि इति, भ्रमभिन्नमित्यर्थः। इदं चांशिकभ्रमस्यालक्ष्यत्वे, तल्लक्ष्यत्वे तु तद्वति तत्प्रकारत्वं, निर्विकल्पस्य लक्ष्यत्वे—"तदभाववति तदप्रकारकत्वम्" इत्यर्थः। तस्य विभागः—अव्यपदेश्यं व्यववसायात्मकमिति, निर्विकल्पकं सविकल्पकं चेति द्विविधं प्रत्यक्षमित्यर्थः ॥ ४ ॥

अनुमानं लक्षयति विभजते च –

**अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टं च ॥ ५ ॥**

आनन्तर्य्यवाचकोऽथशब्दो हेतुहेतुमद्भावसङ्गतिसूचनायः तत्पूर्वकं=प्रत्यक्षपूर्वकंः प्रत्यक्षं=प्रत्यक्षविशेषो व्याप्त्यादिविषयकः तेन व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वं लभ्यते। अनुमानमनुमितिः 'यतः' इत्यध्याहारेण च करणलक्षणम्। अथवा करणमेवेदंःतत्रानुमानमिति करणल्युटा अनुमितिकरणमिति समाख्याबलादेव लब्धंः तच्च व्याप्तिज्ञानं प्रत्यक्षपूर्वकं = सहचारप्रत्यक्षपूर्वकं। विभजते-त्रिविधमिति; पूर्वं = कारणंः तद्वत् = तल्लिङ्गकं पूर्ववत्ः यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानं। शेषः=कार्यं, तद्वत्=तल्लिङ्गकं शेषवत्;यथा नदीवृद्ध्या वृष्ट्यनुमानं। सामान्यतोदृष्टं = कार्यकारणभिन्नलिङ्गकंः यथा पृथिवीत्वेन द्रव्यत्वानुमानम्। अथवा पूर्वम् = अन्वयः, तद्वत्केवलान्वयीत्यर्थः, यथा अभिधेयं प्रमेयत्वादित्यादि। शेषो = व्यतिरेकः, तद्वत्केवलव्यतिरेकीत्यर्थः; यथा-पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् इत्यादि। सामान्यतोदृष्टम्=अन्वयव्यतिरेकिः यथा वह्निमान् धूमादित्यादि ॥ ५ ॥

उपमानं लक्षयति—

**प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥ ६ ॥**

प्रसिद्धस्य=पूर्वप्रमिततस्य गवादेः, साधर्म्यात्=सादृश्यात् तज्ज्ञा-

---

* अत्र द्रष्टव्यं—प्रत्यक्षहेतुरिन्द्रियार्थसंनिकर्षः संयोग—संयुक्तसमवाय संयुक्तसमवेतसमवाय—समवाय—समवेतसमवाय—विशेषणविशेष्यभाव भेदात् षोढा। अस्य प्रपञ्चस्तु न्यायमुक्तावल्यामवलोकनीयः, विस्तरभिया इह नोच्यते।

नात्, साध्यस्य=गवयादिपदवाच्यत्वस्य, साधनं=सिद्धिः, उपमानं=उपमितिः, यत इत्यध्याहारेण च करणलक्षणम्। अथवा साध्यसाधनमिति करणल्युटा करणलक्षणमेवेदम्। अत्र च वैधर्म्योपमितिमपि मन्यन्ते टीकाकृतः। यथाऽतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्यज्ञानादुष्ट्रे करभपदवाच्यताग्रहः। "एवमन्योऽप्युपमानस्य लोके विषय" इति भाष्यम्। तथा च मुद्गपर्णीसदृशी ओषधी विषहन्त्रीत्यतिदेशवाक्यार्थे ज्ञाते मुद्गपर्णीसादृश्यज्ञाने जाते इयमोषधी विषहरणीति उपमित्या विषयीक्रियत इत्यादि ॥ ६ ॥

शब्दं लक्षयति—

आप्तोपदेशः शब्दः ॥ ७ ॥

शब्द इति लक्ष्यकथनं, तदर्थः प्रमाणशब्द इति। आप्तोपदेश इति लक्षणम्। आप्तः प्रकृतवाक्यार्थयथार्थज्ञानवान्, तस्योपदेश इत्यर्थः। प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः शब्दः इति फलितार्थः। अथवा आप्तः=यथार्थः, उपदेशः=शाब्दबोधो यस्मादिति बहुव्रीहिः, शाब्दत्वं च जातिविशेषः, तथा च यथार्थशाब्दज्ञानकरणत्वमर्थः। अत्र च विशेष्यावृत्त्यप्रकारकत्व-तद्वति-तत्प्रकारकत्वादिप्रमालक्षणानामेकं लक्षणे परं च लक्ष्यतावच्छेदके निवेशनीयमतो नाभेदः ॥ ७ ॥

विभजते—

स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ८ ॥

*स प्रमाणशब्दः शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगम्यार्थको दृष्टार्थकः, शब्दतदुपजीविप्रमाणमात्रगम्यार्थकोऽदृष्टार्थकः। तथा च दृष्टार्थकत्वादृष्टार्थकत्वभेदात्प्रमाणशब्दस्य द्वैविध्यमित्यर्थः ॥ ८ ॥

प्रमाणलक्षणप्रकरणं समाप्तम् ॥ २ ॥

---

प्रमेयं विभजते लक्षयति च—

आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥

* "स" इत्यतः पूर्वं "शब्दपूर्वक उपनीतज्ञानादि" इत्यधिक पाठः

अत्र 'तु' शब्दः पुनरर्थे । तथा चैतेषां पुनः प्रमेयत्वं, न तु प्रमाविषयत्वेन संयोगादीनामपि । प्रमेयशब्दो हि वादादिशब्दवत् परिभाषाविशेषेण द्वादशसु प्रवर्त्तते, तत्र च प्रकृष्टं मेयं प्रमेयम् इति योगार्थः। प्रकर्षश्च संसारहेतुमिथ्याज्ञानविषयत्वं, मोक्षहेतुधीविषयत्वं वा, रूढ्या च तावदन्यान्यत्वमर्थः, लक्षणमपि तदेव । प्रमेयं किमित्याकाङ्क्षायाम् आत्मादयो दर्शिता इत्यतो वचनभेदेपि नानन्वयः, वेदाः प्रमाणमित्यादावप्येवम् । अन्यथा आत्मसूत्रे * विगतिः स्यात्, तथा च वक्ष्यते। प्रमेयत्वेनैक्यमिति प्रतिपादनाय, अन्यतमाज्ञानेऽपि नापवर्ग इति प्रतिपादनाय वा प्रमेयमित्येकवचनमित्यन्ये, तच्चिन्त्यम् । अत्रापि आत्मा च शरीरं च इन्द्रियाणि चार्थाश्च बुद्धिश्च मनश्च प्रवृत्तिश्च दोषाश्च प्रेत्यभावश्च फलं च दुःखं चापवर्गश्चेति यथावचनं विग्रहं वर्णयन्ति । अत्र प्राधान्यात्कारणरूपप्रमेयषट्कमभिधाय कार्यरूपप्रमेयषट्कमभिहितम्, तत्र तत्र पूर्वपूर्वस्य प्राधान्यात् प्रथममुद्देश इति वदन्ति ॥ ६ ॥

तत्र प्रथमोद्दिष्टमात्मानं लक्षयति—

**इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् ॥ १० ॥**

अत्र चात्मनः प्रत्यक्षत्वाल्लिङ्गकथनमसङ्गतम्, न च शरीरातिरिक्तात्मव्युत्पादनार्थं तदिति वाच्यम्, अग्रिमपरीक्षावैयर्थ्यापत्तेः, लक्षणाकथनेन न्यूनत्वं चेति चेन्न, लिङ्गपदस्य लक्षणार्थत्वात् । न च लिङ्गमित्येकवचनेन मिलितानां लक्षणत्वं प्रतीयते, तच्चायुक्तं वैयर्थ्यादिति वाच्यं । किं लक्षणमित्याकाङ्क्षायामिच्छादीनामभिधानान्मिलितं लक्षणमिति प्रत्यायकाभावात्। तथा च प्रत्येकमेव लक्षणम्। अत्र ज्ञानेच्छाप्रयत्नानाम् † आत्ममात्रस्य लक्षणत्वं, सुखदुःखद्वेषाणां ‡ संसारिणो लक्षणत्वमिति ॥ १० ॥

क्रमप्राप्तं शरीरं लक्षयति—

**चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥**

अत्र चेष्टादिमिलिताश्रयत्वं न लक्षणं वैयर्थ्यात्, अपितु आश्रयपदस्य

---

* १।१।१० सूत्रे "इच्छा ००० ज्ञानानि—लिंगम्" इत्यत्रापि '०ज्ञानानि-लिंगम्" इत्यनयोरपि न भविष्यत्यन्वय इत्यर्थः ।

† आत्ममात्रस्य जीवेश्वरयोरिति । ‡ संसारिणः जीवमात्रस्येति ॥

प्रत्येकमन्वयाच्चेष्टाश्रयत्वादिलक्षणत्रये तात्पर्यम्। चेष्टात्वं च प्रयत्नजन्यतावच्छेदको जातिविशेषः। न च शरीरावयवेऽतिव्याप्तिः अन्त्यावयवित्वेन विशेषणात्। न च निष्क्रियविनष्टशरीरेऽव्याप्तिस्तादृशे मानाभावात्। अत एवाह-इन्द्रियाश्रय इति। इन्द्रियाश्रयत्वं च अवच्छेदकताख्यस्वरूपसम्बन्धविशेषेण, चक्षुष्मान् देवदत्तोयमित्यादिप्रतीतेः। अर्थाश्रयत्वमित्यत्रार्थशब्दो न रूपादिपरस्तदाश्रयत्वस्य घटादावतिव्याप्तेः, किन्तु सुखदुःखान्यतरपरः, अत एव भाष्ये "यस्मिन्नायतने सुखदुःखयोः प्रतिसंवेदनं प्रवर्त्तते स एषामाश्रयस्तच्छरीरम्" इति। वस्तुतस्तु अन्यतराश्रयत्वमपि न लक्षणं, किन्तु सुखाश्रयत्वं दुःखाश्रयत्वं चेति लक्षणद्वये तात्पर्यं, शरीरस्य तदाश्रयत्वमवच्छेदकतासंबन्धेन। हस्तादेरलक्ष्यत्वे त्वन्त्यावयवित्वेन विशेषणीयं, स्वर्गिशरीरे नारकिशरीरे वृक्षादौ च सुखदुःखस्वीकारान्नाव्याप्तिः न च तच्छून्यखण्डशरीरेऽव्याप्तिः सुखाद्याश्रयवृत्तिद्रव्यत्वव्याप्यव्याप्यजातिमत्वस्य विवक्षितत्वात्, तादृशजातिश्च मनुष्यत्वचैत्रत्वादिः। कल्पभेदेन नरसिंहशरीराणां भेदान्नरसिंहत्वजातिमादाय नरसिंहशरीरे लक्षणसमन्वय इति ॥ ११ ॥

इन्द्रियं विभजते लक्षयति च—

**घ्राणरसनचक्षुस्त्वक्श्रोत्राणि इन्द्रियाणि भूतेभ्यः ॥ १२ ॥**

यद्यपि मनसोऽपीन्द्रियत्वमस्त्येव, तथापि घ्राणत्वादेरुपलक्षणपरत्वान्न दोषः, वस्तुतस्त्विन्द्रियाणीत्यस्य बहिरिन्द्रियाणीत्यर्थः। तेन भूतेभ्य इत्यस्य नासङ्गतिः। अत्र चैतानि इन्द्रियाणीति वदता घ्राणाद्यन्यान्यत्वं लक्षणमिति सूचितं, प्रत्यक्षजनकतावच्छेदकतया इन्द्रियत्वम् अखण्डोपाधिरूपमित्यन्ये। घ्राणत्वादिकं जातिविशेषरूपं, कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रं, घ्राणादीनि किंप्रकृतिकानीत्याकाङ्क्षायामाह—भूतेभ्य इति। तेनेन्द्रियाणामहंकारप्रकृतिकत्वं नेति मन्तव्यम्। व्युत्पादयिष्यते चेदं तृतीयाध्याये। अत्र घ्राणादीनां चतुर्णां पृथिव्यादिजन्यत्वं संभवति, श्रोत्रस्य = कर्णशष्कुल्यवच्छिन्नाकाशस्य कर्णशष्कुल्या जन्यत्वादेव जन्यत्वव्यपदेशः। अथवा अभिन्नानीति पूरयित्वा भूताभिन्नानीति व्याख्येयम्। घ्राणादीत्यस्योपलक्षणपरत्वे तु भूतेभ्य इति बहिरिन्द्रियपरम् ॥ १२ ॥

भूतान्येव कानीत्याकाङ्क्षायाम् आह—

**पृथिव्यापस्तेजोवायुराकाशमिति भूतानि ॥१३॥**

कार्य्यारम्भे परस्परानपेक्षत्वसूचनायासमासकरणम् । भूतत्वं तु बहिरिन्द्रियग्रहणयोग्यविशेषगुणवत्त्वम् । पृथिवीत्वादयस्तु जातिविशेषा इति ॥ १३ ॥

क्रमप्राप्तमर्थं विभजते लक्षयति च—

**गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणा-स्तदर्थाः ॥ १४ ॥**

वैशेषिकाणां द्रव्यगुणकर्मस्वर्थशब्दाभिधेयत्वम् अतः पञ्चानां गन्धादीनामेव कथं तत्त्वमित्याशङ्कानिरासाय तदर्था इत्युक्तम्, तेषाम्= इन्द्रियाणाम्, अर्थाः=विषया उद्दिष्टा अपि त एवेत्याशयः। इत्थं च तदर्थत्वं लक्षणमिति मन्तव्यम् । तच्छब्देन बहिरिन्द्रियाणि परामृश्यन्ते, तथा चैकैकबहिरिन्द्रियमात्रग्राह्यविशेषगुणत्वं, बहिरिन्द्रियद्वयाग्राह्यबहिरिन्द्रियग्राह्यगुणत्वं वा तदर्थः । पृथिव्यादिगुणा इति लक्ष्यनिर्देशः, ते के गुणा इत्याकांक्षायामाह—गन्धेत्यादि । पृथिव्यादिगुणा इति * षष्ठीसमासो भाष्यादिसंमतस्तेन गुणगुणिनोरभेदो नेति सूचितम् ॥ १४ ॥

बुद्धिं लक्षयितुमाह—

**बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥**

अनर्थान्तरं=समानार्थकं, न तु साङ्ख्यानामिव बुद्धितत्त्वस्य महत्तत्त्वापरपर्यायस्य परिणामविशेषो ज्ञानम् । यथा चैतत् तथा वक्ष्यते, तथा च बुद्ध्यादिपदवाच्यत्वमनुभवसिद्धज्ञानत्वजातिरेव वा लक्षणमिति भावः ॥ १५ ॥

मनो लक्षयति—

**युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥**

---

* वार्त्तिककारः तु "षष्ठीसमासस्तावन्न पृथिव्यादीनामनिन्द्रियार्थत्वप्रसंगात्" इत्यादियुक्तिभिः षष्ठीसमासपक्षं खण्डयित्वा 'पृथिव्यादीनि च' 'गुणाश्च' इतिद्वन्द्व समासं मेने । यथोक्तं तेन—"तस्मात् व्यवस्थितमेतत् पृथिव्यादीनि गुणाश्चेति द्वन्द्वःसमासः" इति । वाचस्पतिमिश्राश्च "भाष्य न षष्ठीसमासज्ञापनार्थमपित्वर्थाभिधानमात्रम्" इत्युक्तवन्तः ।

युगपद्=एककाले। एकात्मनीति पूरणीयम्। ज्ञानानामनुत्पत्तिर्यतः स एव धर्मो ज्ञानकरणाणुत्वं मनसो लिङ्गं=लक्षणमित्यर्थः। तथाहि चक्षुरादिषु विषयसंबद्धेष्वपि यस्यासन्निधानादेकं न ज्ञानं जनयति, यत्सम्बन्धादपरं च ज्ञानं जनयति, तदेवास्तु निखिलज्ञानजनकं सुखादि-साक्षात्कारासाधारणकारणम्, तदेकमेव लाघवात् सिद्धं मन इत्यर्थः। एवमव्यख्याने च लक्षणप्रकरणे प्रमाणोपन्यासोऽसंगतः स्यादिति। अन्ये तु सति धर्मिणि लक्षणचिन्तेत्यतो मनःसाधानाय युगपदिति सूत्रम्। इत्थं च मनःसिद्धौ निःस्पर्शाणुत्वादिकं लक्षणं सुकरमि त्याशय इति वदन्ति ॥ १६ ॥

प्रवृत्तिं लक्षयति विभजते च—

**प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः ॥ १७ ॥**

अत्र च प्रवृत्तित्वं रागजन्यतावच्छेदको जातिविशेषः, स एव लक्षणम्। ईश्वरकृतेरपि लक्ष्यत्वे यत्नत्वमेव तथा। जीवनयोनियत्ने निवृत्तौ च मानाभावात्, तत्सद्भावेपि प्रवृत्तित्वं नित्ययत्नसाधारणं, तद्व्यावृत्तं वा तथा। द्वन्द्वान्तरश्रुतारम्भपदस्य प्रत्येकमन्वयाद्वा-गारम्भादिभेदेन त्रिविधा प्रवृत्तिः। * 'मनोत्र बुद्धिरित्यभिप्रेतम्' इति भाष्यम्। शरीरशब्दश्च चेष्टावत्त्वेन हस्तादिसाधारणः। तथा वचनानुकूलो यत्नो वागारम्भः। शरीरगोचरो यत्नश्चेष्टानुकूलयत्नो वा शरीरारम्भः। एतद्द्वयभिन्नो यत्नो बुद्ध्यारम्भः। स च ध्यानदया-देवदर्शनाद्यनुकूलः पर्यवस्यति। प्राञ्चस्तु सामान्यविशेषलक्षणेष्व-इष्टजनकत्वं निवेशयन्ति। इयं च कारणरूपा प्रवृत्तिः। कार्यरूपा तु धर्माधर्मात्मिकेति ॥ १७ ॥

दोषं लक्षयति—

**प्रवर्तनालक्षणा दोषाः ॥ १८ ॥**

दोषा इति बहुवचनं रागद्वेषमोहात्मकलक्ष्यत्रज्ञापनाय। प्रवर्त्त-ना=प्रवृत्तिजनकत्वं तदेव लक्षणं येषां ते। यद्यपीदं शरीरादृष्टेश्वरेच्छा-

---

* "बुद्धिशब्देनात्र मनोऽभिप्रेतम्" इत्येव पाठ उपलभ्यते मुद्रितामुद्रि-तवृत्तिपुस्तकेषु। परन्तु भाष्ये तु योऽस्माभिरत्र वृत्तिग्रन्थे संनिविष्टः, स एव उपलभ्यते।

रुपपत्तेः, अन्यथा परमाणुपुञ्जत्वे चैकदेशधारणेन सकलधारणमेकदेशाकर्षणेन सकलाकर्षणं च न स्यादित्यर्थः ॥ ३५ ॥

इदमनवद्यं—नौकाकर्षणेन नौकास्थाकर्षणवत्, कुण्डधारणेन कुण्डस्थदधिधारणवच्चोपपत्तेर्विजातीयसंयोगबलेनैवावयवावयविभावाभावेऽप्युपपत्तेः, अतः पूर्वोक्तां युक्तिमेव साधीयसीं मन्यमानस्तत्र परोक्तं समाधानमाशङ्क्य दूषयति—

**सेनावनादिवद्ग्रहणमिति चेन्न आतीन्द्रियत्वादणूनाम् ॥ ३६ ॥**

अतिदूरस्थैकमनुष्यैकवृक्षादेरप्रत्यक्षत्वेऽपि सेनावनादिप्रत्यक्षवदेकपरमाणोरप्रत्यक्षत्वेऽपि तत्समूहघटादेः प्रत्यक्षं स्यादिति चेद् ब्रूषे, तदपि न अणूनामतीन्द्रियत्वात् प्रत्यक्षे च महत्त्वस्य हेतुत्वात् सेनावनादि प्रत्यक्षं युज्यते, न त्वणूनां महत्त्वाभावादिति भावः ॥३६॥

समाप्तमवयविपरीक्षाप्रकरणम् ॥४॥

अवसरेण क्रमप्राप्तमनुमानं परीक्षितुं पूर्वपक्षयति—

**रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ॥ ३७ ॥**

अनुमानस्य त्रैविध्यं पूर्वमुक्तं । तत्र त्रिविधस्याप्रामाण्ये साधितेऽनुमानमप्रमाणमर्थात्सिद्धमित्याशयेनेदम् । अनुमानमनुमानत्वेनाभिमतं न प्रमाणं=प्रमितिकरणं व्यभिचारिहेतुकत्वात् । तत्र त्रिविधे व्यभिचारं दर्शयति रोधेत्यादिना । नदीवृद्ध्या पिपीलिकाण्डसंचारेण मयूररुतेन च वृष्ट्यनुमानं त्रिविधोदाहरणं न संभवति नदीरोधाधीननदीवृद्ध्याऽऽश्रयोपघाताधीनपिपीलिकाण्डसंचारेण मनुष्यकर्तृकमयूररुतसदृशरुतेन व्यभिचारात् । पिपीलिकाण्डसंचारस्य वृष्टिहेतुत्वाभिप्रायेणेदम् । अथवा लक्षणसूत्रे पूर्ववत्=पूर्वकालीनसाध्यानुमापकं, शेषवद्=उत्तरकालीनसाध्यानुमापकं, सामान्यतोदृष्टं = विद्यमानसाध्यस्यानुमापकम् इत्यर्थ इत्याशयः । एतेन त्रकालिकसाध्यानुमापकत्वं न सम्भवति । परे तु–पिपीलिकाण्डसञ्चारेणात्यन्तोष्मानुमानं, ततश्च महाभूतक्षोभानुमानं तस्य च वृष्टिहेतुत्वात्, तेन वृष्ट्यनुमानमिति–वदन्ति । एवमन्यत्रापि व्यभि-

चारशङ्कासंभवादव्यभिचारनिश्चयस्यानुमितिहेतोश्च दुर्लभत्वात् प्रामाण्यं न सम्भवतीत्याशयः ॥ ३७ ॥

समाधत्त-

**नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ॥ ३८ ॥**

अनुमानाप्रामाण्यं न युक्तमेकदेशरोधजनदीवृद्धेः त्रासजपिपीलिकाण्डसंचारात् मयूररूतसदृशरूताच्च लिङ्गिभूतानां नदीवृद्ध्यादीनां भिन्नत्वान्न दोषः। न च सर्वत्र व्यभिचारशङ्का, सत्यां तस्यां तर्केण तदपनयनान्न दोष इत्याशयः ॥ ३८ ॥

समाप्तमनुमानपरीक्षाप्रकरणम् ॥५॥

अनुमानस्य त्रिकालविषयत्वमभिमतं, तन्न युक्तं वर्तमानाभावेन तदधीनज्ञानयोरतीतानागतयोरभावेन कालत्रयात्मकविषयाभावात् इत्याशयेन वर्तमानपरीक्षाप्रकरणमारभमाणो वर्तमानमाक्षिपति—

**वर्तमानाभावः पततः पतितपतितव्य-**
**कालोपपत्तेः ॥ ३९ ॥**

वर्तमानाभावःअतीतानागतभिन्ने कालत्वाभावः। व्युत्पादयति—पततइति। पततः फलादेर्वृक्षावधिकः कश्चन देशः पतिताध्वा, भूम्यवधिकः कश्चन पतितव्याध्वा, न तु वर्तमानस्य प्रसङ्गोऽपीति भावः ॥ ३९ ॥

समाधत्त-

**तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात् ॥४०॥**

वर्त्तमानाभावे तयोरतीतानागतयोरप्यभावः स्यात्तयोस्तदपेक्षत्वात्। वर्तमानध्वंसप्रतियोगित्वं ह्यतीतत्वं, वर्तमानप्रागभाव—प्रतियोगित्वं ह्यनागतत्वमिति भावः ॥ ४० ॥

ननु तयोः परस्परापेक्षयैव सिद्धेर्न वर्तमानापेक्षेत्यत आह—

**नातीतानागतयोरितरेतरापेक्षासिद्धिः ॥ ४१ ॥**

*अन्योन्याश्रयादिति भावः ॥ ४१ ॥

* अन्योन्याश्रयात् न कस्यापि सिद्धिर्भवति। कुतः? यस्मादेकाभावेऽन्यतराभावादुभयाभावः। अयं भावः—यद्येकस्यान्यतरापेक्षा सिद्धिः,

तयोरप्यभावे का गतिः ? अतो युक्त्यन्तरमाह—

**वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥ ४२ ॥**

वर्त्तमानाभावे प्रत्यक्षं * नोपपद्यते प्रत्यक्षस्य वर्तमानविषयत्वात्। अत एवाहुः- 'संबद्धं वर्तमानं च गृह्यते चक्षुरादिना'' इति। प्रत्यक्षाभावे च सर्वमेव ग्रहणं=ज्ञानं न स्यात् प्रत्यक्षमूलकत्वादितरज्ञानामिति भावः ॥ ४२ ॥

ननु यदि वर्तमानध्वंसप्रतियोगित्वमतीतत्वं, वर्तमानप्रागभावप्रतियोगित्वं च भविष्यत्वं; तदा वर्तमान एव घटे कथं श्याम आसीद्रक्तो भविष्यतीतिधीः ? अत आह—

**कृतताकर्तव्यतोपपत्तेस्तुभयथा ग्रहणम् ॥ ४३ ॥**

वर्तमानस्यापि घटादेः श्यामरक्तरूपादीनां कृतताकर्तव्यतयोः=अतीतताभविष्यतयोरुपपत्तेर्घटादेरप्यतीतानगतत्वेन व्यवहारः † परम्परासम्बन्धादित्यर्थः ॥ ४३ ॥

समाप्तं वर्त्तमानपरीक्षाप्रकरणम् ॥ ६ ॥

अथावसरेण क्रमप्राप्तोपमानं परीक्षितुं पूर्वपक्षयति—

**अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ॥४४॥**

प्रसिद्धसाधर्म्यादुपमानमुक्तं, तन्न युक्तं, यतः साधर्म्यमात्यन्तिकं प्रायिकमैकदेशिकं वा न सम्भवति। नहि आत्यन्तिकसाधर्म्येण गौरिव गौरित्युपमानं प्रवर्त्तते, न वा प्रायिकसाधर्म्येण गौरिव महिष इति। न वा यत्किंचित्साधर्म्येण मेरुरिव सर्षप इति साधर्म्यस्य चोपलक्षणत्वाद्वैधर्म्योपमानमप्येवं खण्डनीयम् ॥ ४४ ॥

---

अन्यतरस्येदानीं किमपेक्षा ? यद्यन्यतरस्य एकापेक्षा सिद्धिः, एकस्येदानीं किमपेक्षा ? एवमेकस्याभावेऽन्यतरस्याभावादुभयाभावप्रसंग अनिवार्य्य एव। अर्थात् वर्त्तमानानङ्गीकारे अतीतानागतावपि न सिध्यत इत्याशयः।

* कथं पुनर्वर्त्तमानाभावे प्रत्यक्षानुपपत्तिः ? यस्मादिदं प्रत्यक्षं वर्त्तमानाधारं कार्य्यत्वात् क्षीरवत् इति यत्कार्यं तद्वर्त्तमानाधारं दृष्टं, यथा क्षीरं, कार्यंच प्रत्यक्षं, तस्माद्वर्त्तमानाधारमिति वर्तमानकालानभ्युपगमादनाधारं प्रत्यक्षं प्राप्नोति। अनाधारं च कार्यं नास्तीति प्रत्यक्षानुपपत्तिः। ( न्या० वा० )

† स्वाश्रयाश्रयत्वरूपपरम्परासंबन्धादित्यर्थः।

समाधत्ते —

**प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्त-
दोषानुपपत्तिः ॥ ४५ ॥**

प्रसिद्धं=प्रकर्षेण महिषादिव्यावृत्त्या सिद्धं=ज्ञातं यत्साधर्म्यं तज्ज्ञानस्योपमितिकरणत्वान्न दोषः । साधर्म्यं च प्रकरणाद्यनुसारात् क्वचित् किंचिदिति ॥ ४५ ॥

अनुमानेन चरितार्थं 'नोपमानं मानान्तरम्' इति वैशेषिकमतमाशङ्कते—

**प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ४६ ॥**

प्रत्यक्षेण=गोसादृश्यविशेषेण अप्रत्यक्षस्य=गवयपदवाच्यत्वस्य-अनुमितेर्नोपमानं मानान्तरमिति ॥ ४६ ॥

अत्रोत्तरयति—

**नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः ॥ ४७ ॥**

अप्रत्यक्षे=व्याप्यवत्तया अप्रत्यक्षे, अनुमानत्वेन प्रमाणार्थं=प्रमाणप्रयोजनंउपमानस्य न पश्याम इत्यर्थः। अथवा गवये गवयवृत्तौ अप्रत्यक्षे गवयपदवाच्यत्वे उपमानस्य प्रमाणार्थं=प्रमां=उपमानजन्यां प्रमांअनुमानत्वेन न पश्याम इत्यर्थः, व्याप्तिज्ञानाभावादिति भावः ॥ ४७ ॥

ननु व्याप्तिज्ञाननियमः कल्प्यतामित्याशयेन युक्त्यन्तरमाह—

**तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४८ ॥**

अनुमानादुपमानस्य नाविशेषः तथेत्युपसंहारात्। 'यथा गौस्तथा गवय' इति ज्ञानादुपमानसिद्धेरुपमानाधीनसिद्धेरुपमितेः। तथा च व्याप्तिज्ञानानपेक्षसादृश्यज्ञानाधीनोपमितिःइत्यनुभवसिद्धम्। किञ्च नानुमिनोमि किंतूपमिनोमीत्यनुव्यवसायसिद्धोपमितिर्नापलपितुं शक्यत इत्याशयः ॥ ४८ ॥

समाप्तमुपमानप्रामाण्यपरीक्षाप्रकरणम् ॥ ७ ॥

क्रमप्राप्तं शब्दं परीक्षितुं पूर्वपक्षयति—

**शब्दो ऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ॥ ४९ ॥**

शब्दो ऽनुमानमित्यस्य शाब्दबोधो ऽनुमितिरिति पर्यवसितार्थः

तथा च शब्दो लिङ्गविधया ऽनुमितिकरणम् अर्थस्य शब्दप्रतिपाद्यस्यानुपलब्धेरप्रत्यक्षत्वादनुमेयत्वादिति । तथा च शाब्दज्ञानमनुमितिरप्रत्यक्षविषयत्वात् , प्रत्यक्षभिन्नत्वाद्वेत्यत्र तात्पर्यम् ॥ ४९ ॥

हेत्वन्तरमाह—

**उपलब्धेरद्विप्रवृत्तित्वात् ॥ ५० ॥**

उपलब्धेः शाब्दबोधत्वेनाभिमताया अनुमितित्वेनाभिमतायाश्चाद्विप्रवृत्तत्वात् = अद्विप्रकारत्वात् । अनुमितित्वं शाब्दत्वं न जातिद्वयं शब्दस्य लिङ्गविधया बोधकत्वाल्लिङ्गान्तरजज्ञानवद्विजातीयत्वाभावात् ॥ ५० ॥

हेत्वन्तरमाह—

**सम्बन्धाच्च ॥ ५१ ॥**

सम्बन्धान्नियतसम्बन्धाज्ज्ञायमानादिति शेषः । शब्दो हि व्याप्तिग्रहणसापेक्षो बोधयति । तेन शाब्दबोधो ऽनुमितिरिति भावः ॥ ५१ ॥

सिद्धान्तसूत्रम्—

*** आप्तोपदेशसामर्थ्याच्छब्दादर्थे संप्रत्ययः ॥५२॥**

आप्तस्य=भ्रमादिशून्यस्य, य उपदेश =शब्दस्तत्र यत्सामर्थ्यम्=आकाङ्क्षायोग्यतादिमत्त्वं ततः। अथवा आप्तं=प्राप्तं यदुपदेशसामर्थ्यम्=आकाङ्क्षादिमत्त्वं ततः=तत्सहकारात् । सावधारणश्चायं निर्देशस्तेन व्याप्तिनिरपेक्षादाकाङ्क्षादिज्ञानादर्थे संप्रत्ययः=शाब्दबोधः सम्भवतीति नानुमानान्तर्भावः शब्दस्येत्यर्थः । शब्दादमुमर्थं प्रत्येमि न त्वनुमिनोमीत्यनुभवादिति भावः ॥ ५२ ॥

शब्दार्थयोः सम्बन्धाभाव इत्यप्याह—

**† पूरणप्रदाहपाटनानुपपत्तेश्च सम्बन्धाभावः ॥ ५३ ॥**

शब्देन सहार्थस्य सम्बन्धाभावः=व्याप्त्यभावः । हेतुमाह—पूर-

---

*' प्रत्यायनाङ्गान्वयव्यतिरेकिज्ञानं त्वान्यादृशं शब्दे, अन्यादृशं त्वनुमाने । तद्धि पक्षधर्मतापेक्षमनुमाने, शब्दे तु तदन्यापेक्षमित्यत्र सूत्रं भवति । " ( ता० टी० )

† भाष्यवार्त्तिकादौ 'पूरणप्रदाह०' इतिसूत्रात्पूर्वं "प्रमाणतोऽनुपलब्धेः" इत्येकं सूत्रं विद्यते ॥

णेति। यदि शब्दस्यार्थेन व्याप्तिः स्यात्तदाऽन्नाग्न्यसिशब्दैर्मुखपूरण मुखदाहमुखपाटनानि स्युः, शब्दस्य व्याप्यस्य सत्त्वेनान्नादेरर्थस्यापि सत्त्वात् ॥ ५३ ॥

तत्किं शब्दोऽसंबद्धमेवार्थं प्रत्याययति, तथा सत्यतिप्रसङ्ग इत्याशङ्कते—

**शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ५४ ॥**

अप्रतिषेधः=शब्दार्थयोः सम्बन्धप्रतिषेधो न, शब्दार्थयोः संबन्धस्य व्यवस्थितत्वात्। कश्चिदेव हि शब्दःकश्चिदेवार्थं बोधयति, न सर्वः सर्वमिति। इत्थं च सम्बन्धेऽङ्गीकृते तेन संबन्धेन व्याप्तिरप्यावश्यकी, स च संबन्धो न मुखपूरणादिनियामक इतिभावः ॥५४॥

उत्तरयति —

*** न सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य ॥ ५५ ॥**

मन्मतेऽपि शब्दार्थयोरव्यवस्था न, शब्दाधीनस्यार्थसंप्रत्ययस्य सामयिकत्वात्=शक्तिग्रहाधीनत्वात् शक्तिरूपसंबन्धेन च न व्याप्तिस्तस्या वृत्तिनियामकसंबन्धाधीनत्वादिति भावः ॥ ५५ ॥

**जातिविशेषे चानियमात् ॥ ५६ ॥**

शब्दस्यार्थेन सह न स्वाभाविकः संबन्धः जातिविशेषेऽनियमात् शब्दस्यानियतार्थकत्वदर्शनाद्। आर्या हि यवशब्दाद्दीर्घशूकविशेषं प्रतियन्ति, म्लेच्छास्तु कंगुमिति। नियमे तु सर्वः सर्वं प्रतीयात्।

* शब्दार्थव्यवस्था न संबन्धकारिताऽस्ति, अपितु समयकारिता=संकेतकारिता एव। अस्यशब्दस्यायमर्थं इति अत्र लोककृतः संकेत एव प्रमाणम्, न तु कश्चित्स्वाभाविकः सम्बन्धः। कुतः? स्वभाविकस्तु सम्बन्धस्सर्वत्र समान एव भवति। यथाप्रदीपप्रकाशयोः, प्रदीपः यथाऽस्माकं प्रकाशयति तथा इतरेषामपि; न च तथा शब्दः, यथा "देवशब्दस्य योऽर्थोऽस्माभिर्बुध्यते पारसीकास्तु तद्विपरीतमेवार्थं गृह्णन्ति। अत एवाह वार्तिककृत्—"यदि स्वाभाविकः शब्दार्थसबन्धोऽभविष्यन्नजातिविशेषे शब्दार्थव्यवस्थाऽभविष्यत्। अस्ति तु तु जातिविशेष प्रयोगः जातिविशेषे यथाकामं प्रयोगो दृष्टः नतु स्वाभाविकेन सम्बन्धेन संबद्धानां जातिविशेषे व्यभिचारो दृष्टः। न हि प्रदीपोऽस्माकमन्यथा प्रकाशयत्यन्यथा जातिविशेष इति तात्पर्यं। ५५,५६ सूत्रयोः।

आपाततश्चेदं नानाशङ्कावपि, यत्र यस्य शक्तिग्रहस्तत्र तदर्थोपस्थितेः ॥ ५६ ॥

समाप्तं शब्दसामान्यपरीक्षाप्रकरणम् ॥ ८ ॥

शब्दस्य दृष्टादृष्टार्थकत्वेन द्वैविध्यमुक्तं, तत्र चादृष्टार्थकशब्दस्य * वेदस्य प्रामाण्यं परीक्षितुं पूर्वपक्षयति—

**तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः † ॥ ५७ ॥**

तस्य=दृष्टार्थकव्यतिरिक्तशब्दस्य ‡ वेदस्य=अप्रामाण्यं। कुतः? अनृतत्वादिदोषात्। तत्र च पुत्रेष्टिकारीर्यादौ ¶ क्वचित्फलानुत्पत्तिदर्शनादनृतत्वम्। व्याघातः=पूर्वापरविरोधः; यथा "उदिते जुहोति, अनुदिते जुहोति, समयाध्युषिते जुहोति। श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति; शवलोऽस्याहुतिमभ्यवहरति, यो ऽनुदिते जुहोति; श्यावशवलावस्याहुतिमभ्यवहरतो, यः समयाध्युषिते जुहोति।" अत्र च उदितादिवाक्यानां निन्दानुमितानिष्टसाधनताबोधकवाक्यविरोधः। पौनरुक्त्यादप्रामाण्यं, यथा "त्रिःप्रथमामन्वाह, त्रिरुत्तमामन्वाह" इत्यत्रोत्तमत्वस्य प्रथमत्वपर्यवसानात् त्रिःकथनेन पौनरुक्त्यम्। एतेषामप्रामाण्ये तद्दृष्टान्तेन तदेककर्तृत्वेन तदेकजातीयत्वेन वा सर्ववेदाप्रामाण्यं साधनीयमिति भावः ॥ ५७ ॥

सिद्धान्तसूत्रम्—

**+ न कर्मकर्तृसाधनवैगुण्यात् ॥ ५८ ॥**

* "तदित्यधिकारः, यस्मात्प्राप्तमपि प्रकरणेन शब्दं तच्छब्देन पुनरभिधत्ते, तेन ज्ञापयति शब्दविशेषं प्रतीयं चिन्ता, न शब्दमात्रं प्रति। अन्यथैवं वक्तव्यं—" अप्रमाणं शब्दोऽनृतव्याघातपुनरुक्तदोषेभ्यः" इति वार्त्तिकं मनसि निधायोक्तं वृत्तिकृता—'अदृष्टार्थकशब्दस्य वेदस्य' इति। † अप्रामाण्यम्=अर्थस्याप्रत्यायकत्वम्। अनृतत्वम्=अयथार्थाभिधानम्। व्याघातः=पदयोर्वाक्ययोर्वा सहासंभवः। पुनरुक्तम्=पूर्वाभिहितार्थाभिधानम् ॥ ‡ वेदशब्देन अत्र ब्राह्मणभागोऽभिप्रेतः, परीक्षिष्यमाणवाक्यानां तत्रैवोपलम्भात्, ६२ सूत्रस्य वृत्तिग्रन्थदर्शनात्, मन्त्रायुर्वेदेतिसूत्रे मन्त्रस्य दृष्टान्तत्वेनोपादानाच्चेति कश्चित्।

¶ कारीरियागादौ इतिपाठान्तरम्।

+ अनृतत्वं परिहरति अनेन सूत्रेण।

न वेदाप्रामाण्यं कर्मकर्तृसाधनवैगुण्यात् फलाभावोपपत्तेः। कर्मणः=क्रियाया वैगुण्यं अयथाविधित्वादि, कर्तृवैगुण्यं अविद्वत्त्वादि, साधनस्य=हविरादेर्वैगुण्यं अप्रोक्षितत्वादि। यथोक्तकर्मणः फलाभावे ह्यनृतत्वं, न चैवमस्तीति भावः॥ ५८॥

व्याघातं परिहरति—

**अभ्युपेत्य कालभेदे दोषवचनात्॥ ५९॥**

न व्याघात इति शेषः। अग्न्याधानकाले उदितहोमादिकमभ्युपेत्य=स्वीकृत्य अनुदितहोमादिकरणे पूर्वोक्तदोषकथनान्न व्याघात इत्यर्थः॥ ५९॥

पौनरुक्त्यं परिहरति—

**अनुवादोपपत्तेश्च॥ ६०॥**

च पुनरर्थे। अनुवादोपपत्तेः पुनर्न पौनरुक्त्यम्। निष्प्रोजनत्वे हि * पौनरुक्त्यं दोषः। उक्तस्थले त्वनुवादस्योपपत्तेः प्रयोजनस्य सम्भवात्, एकादशसामिधेनीनां प्रथमोत्तमयोस्त्रिरभिधाने हि पञ्चदशत्वं सम्भवति। तथा च पञ्चदशत्वं श्रूयते "इममहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेण च बाधे, योऽस्मान् द्वेष्टि यं च वयं द्विष्मः" इति॥ ६०॥

अनुवादस्य सार्थकत्वं लोकसिद्धमित्याह—

**वाक्यविभागस्य चार्थग्रहणात्॥ ६१॥**

वाक्यविभागस्य=अनुवादत्वेन विभक्तवाक्यस्य अर्थग्रहणात्=प्रयोजनस्वीकारात्, शिष्टैरिति शेषः। शिष्टा हि विधायकानुवादभेदेन वाक्यं विभज्यानुवादकस्यापि सप्रयोजनत्वं मन्यन्ते; वेदेऽप्येवमिति भावः॥ ६१॥

वेदे वाक्यविभागं दर्शयति—

**विध्यर्थवादानुवादवचनविनियोगात्॥ ६२॥**

मन्त्रब्राह्मणभेदात् द्विविधो वेदः, तत्र ब्राह्मणस्यायं विभागः

*"पुनरुक्तं नाम तस्यैवार्थस्यानङ्गीकृतार्थविशेषस्य यत्पुनर्वचनम्। अनुवादस्तु पुनः श्रुतिसामान्यस्याङ्गीकृतविशेषस्य अर्थस्य वादः। एवं च सति यथोक्तो न दोषः।" इति ( न्याय वा० )

विधिवचनत्वेनार्थवादवचनत्वेनानुवादवचनत्वेन च वेदस्य विनियोगाद् = विभजनात्, अथवा विनियोगाद्=भेदात्। तथा च विध्यादिभेदाद् ब्राह्मणभागस्त्रिधेति शेषः ॥६२॥

तत्र विधिलक्षणमाह--

**विधिर्विधायकः ॥ ६३ ॥**

इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतं वाक्यं विधिः। 'अग्निहोत्रं जुहुयात् स्वर्गकामः, इति ॥ ६३ ॥

अर्थवादः=अर्थस्य=प्रयोजनस्य, वदनं=विध्यर्थप्रशंसापरं वचनं इत्यर्थः। अर्थवादो हि स्तुत्यादिद्वारा विध्यर्थं शीघ्रप्रवृत्तये प्रशंसति। तत्र स्तुत्यादिभेदादर्थवादं विभजते—

**स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥६४॥**

स्तुतिः = साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यम्। यथा 'सर्वजिता वै देवा सर्वमजयन्; सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेव तेनाप्नोति सर्वं जयति' इत्यादि। अनिष्टबोधनद्वारा विध्यर्थप्रवर्तकम् निन्दा। 'एष वा प्रथमो यज्ञानां, यज्ज्योतिष्टोमो, य एतेनानिष्ट्वाऽन्येन यजते, स गर्ते पतत्ययमेवैतज्जीर्यते प्रवामीयते' इत्यादि। पुरुषविशेषनिष्ठमिथोविरुद्धकथनं परकृतिः। यथा 'हुत्वा वपामेवाग्रेऽभिघारयंत्यथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारन्त्यग्नेः प्राणाः पृषदाज्यमित्यभिदधति' इत्यादि। ऐतिह्यसमाचरितकथाकीर्तनं* पुराकल्पः यथा "तस्माद्वा एतेन पुरा ब्राह्मणा बहिष्पवमानं सामस्तोममस्तौषन्-'यज्ञं प्रतनवामहे' " इत्यादि ॥ ६४ ॥

अनुवादलक्षणमाह—

**विधिविहितस्यानुवचनमनुवादः ॥ ६५ ॥**

प्राप्तस्य अनु=पश्चात् कथनं, सप्रयोजनमनुवाद इति सामान्यलक्षणं, तद्विशेषो-विधिविहितस्येति। विध्यनुवादो विहितानुवादश्चेत्यर्थः। अयं चार्थवादानुवादविभागो विधिसमभिव्याहृतवाक्यानां, तेन भूतार्थवादरूपाणां वेदान्तवाक्यानामपरिग्रहान्न न्यूनता ॥ ६५ ॥

शङ्कते—

**नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥६६॥**

---

* तथा कीर्त्तनं इति पाठान्तरम्।

शब्दाभ्यासस्य बोधितार्थकशब्दस्य योऽभ्यासः = पुनः प्रयोगः तस्य उपपत्तेः = सत्त्वाद् अनुवादः पुनरुक्तान्न भिद्यते इत्यर्थः* ॥६६॥

समाधत्ते—

शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥६७॥

अनुवादस्य पुनरुक्तान्नाविशेषः अभ्यासाद् = अभ्यासस्य सप्रयोजनत्वात् । तत्र दृष्टान्तमाह-शीघ्रेति । यथा लोके गम्यतामित्युक्त्वा गम्यतां गम्यतां गम्यताम् इत्यादिकमविलम्बादिबोधार्थमुच्यते तथा प्रकृतेऽपीति † ॥ ६७ ॥

एवमप्रामाण्यसाधकं निरस्य प्रामाण्यं साधयति—

मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥ ६८ ॥

आप्तस्य=वेदकर्त्तुः, प्रामाण्यात्=यथार्थोपदेशकत्वात्, वेदस्य तदुक्तत्वमर्थाल्लब्धं, तेन हेतुना वेदस्य प्रामाण्यमनुमेयं ‡ तत्र दृष्टान्त-

* अर्थात् पुनरुक्ताविशेषत्वाद्धेतोः अनुवादोऽपि न साधुरिति भावः । यथा चोक्तमत्र भाष्ये 'पुनरुक्तमसाधु साधुरनुवाद इति अयं विशेषो नोपपद्यते । कस्माद् ? उभयत्र हि प्रतीतार्थः शब्दोऽभ्यस्यते । चारितार्थस्य शब्दस्याभ्यासादुभयमसाध्विति " ।

† अस्यानुमानप्रयोगः—"अनुवादलक्षणोऽभ्यासः अर्थवान्, प्रत्ययविशेषहेतुत्वात्, शीघ्रतरगमनोपदेशवत् " इति ॥

‡ अथ योऽयमभिलापः 'नित्या वेदाः' इति स कथमिति चेच्छ्रूयताम् तान्येव वेदवाक्यानि मन्वन्तरचतुर्युगान्तरेषु सम्प्रदायाभ्यासाविच्छेदात् प्रवर्त्तन्ते तदपेक्षया लौकिकाः शब्दान् प्रयुञ्जते ' नित्या वेदाः ' इति । यथा नित्याः पर्वता इत्यादि, अथ च योऽय प्रवादः अपोरुषयावेदा: " इति सः कथमिति चेत् तत्र पुरुषशब्दस्य जीवात्मपरत्वात्' वेदानां चेश्वरोक्तत्वाद् "अपौरुषेया वेदाः" इति समाधीयते । अपरंच—अनित्या वेदाश्चेत् कथं तेषां प्रामाण्यमिति चेत्कश्चित् ब्रूयात्, स वक्तव्यः, नह्ययं नियमः, नित्यत्वादेव प्रामाण्यम्, अपितु प्रमेयप्रतिपादकत्वाद्भवति प्रामाण्यमिति । वेदप्रामाण्यसाधकंवाक्यं तु—"वेदवाक्यानि प्रमाणं वक्तृविशेषाभिहितत्वात, मन्त्रायुर्वेदवाक्यावत् " इति, अथवा एककर्तृत्वेन मन्त्रायुर्वेदवाक्यानि पक्षीकृत्य "मंत्रायुर्वेदवाक्यानि सर्वज्ञकर्त्तृकाणि महाजनपरिग्रहेसति अलौकिकार्थप्रतिपादकत्वात्, यानि तु न सर्वज्ञकर्त्तृकाणि, तानिनैवंरूपाणि यथा वातपुत्रीयवाक्यानि " इति व्यतिरेकी हेतुः प्रयोक्तव्यः ।

माह-मन्त्रायुर्वेदप्रामाण्यवदिति । मन्त्रो विषादिनाशकः आयुर्वेदभागश्च वेदस्य एव । तत्र संवादेन प्रामाण्यग्रहात् । तद्दृष्टान्तेन वेदत्वावच्छेदेन प्रामाण्यमनुमेयम् । आप्तं=गृहीतं प्रामाण्यं यत्र स वेदस्तादृशेन वेदत्वेन प्रामाण्यमनुमेयमिति केचित् ॥ ६८ ॥

समाप्तं शब्दविशेषपरीक्षाप्रकरणम् ॥६॥

इति श्रीविश्वनाथभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ विभाग-
परीक्षानिरपेक्षसाङ्गप्रमाणपरीक्षणं नाम
द्वितीयाध्यायस्याद्यमाह्निकम् ।

अथ विभागसापेक्षप्रमाणपरीक्षणं, तदेव चाह्निकार्थः । चत्वारि चात्र प्रकरणानि, तत्रादौ * चतुष्ट्वपरीक्षाप्रकरणम् । अन्यानि च तत्र तत्र वक्ष्यन्ते । तत्राक्षेपसूत्रम्—

**न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् ॥ १ ॥**

प्रमाणानां न चतुष्ट्वं =प्रमाणत्वं नोक्तचतुष्कान्यतमत्वव्याप्यं उक्तान्यवृत्तित्वात् । तत्रान्यवृत्तित्वं व्युत्पादयति—ऐतिह्येत्यादि । ऐतिह्यम्=इति होचुरित्यनेन प्रकारेण यदुच्यते. तद्धि अनिर्दिष्टप्रवक्तृकं परम्परागतं वाक्यं; यथा इह वटे यक्ष इत्यादि । तस्य चाप्तोक्तत्वानिश्चयान्न शब्देऽन्तर्भाव इति भावः । अर्थापत्तिः=अनुपपद्यमानेनार्थेनोपादककल्पनं; यथा वृष्ट्या मेघज्ञानम् वृष्ट्या सह मेघस्य वैयाधिकरण्यान्न व्याप्तिरिति नानुमाने ऽन्तर्भावः । संभवो=भूयः सहचाराधीनज्ञानं; यथा संभवति ब्राह्मणे विद्या, सम्भवति सहस्रे

* 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इतिसूत्रम् । तत्र न चत्वार्य्येव प्रमाणानि एतिह्यादीनामपि प्रमाणान्तरत्वात् । किं ते विद्यमाना नोल्लिखिताः, उताविद्यमानाः । विद्यमानाश्चेत् नोल्लिखिताः । शास्त्रन्यूनता प्रसज्यते; अथ विद्यमाना अपि ते दुष्टाः अतो न वर्णिताः, दोषास्तर्हि तेषां कथनीयाः, अनभिधाने वा शास्त्रस्य न्यूनता दुर्निवाराः, अथवा विद्यमाना अपि ते प्रत्यक्षादिषु अन्तर्भवन्तीति अत्र किं तत्त्वमिति आक्षेपे सति "चत्वार्य्येव प्रमाणानि, ऐतिह्यादयस्तेष्वन्तर्भवंति, प्रत्यक्षाद्यनधिगताविषयकत्वात्तेषाम्, इति समाधानं, तत्प्रतिपादनाय चेदं प्रकरणम् ।

शतम्; अत्र च व्याप्तिर्नापेक्षितेत्याशयः। अभावस्तु=विरोध्यभाव-ज्ञानाधीनविरोध्यन्तरकल्पनं; यथा नकुलाभावज्ञानेन नकुलविरोधिनो व्यालस्य कल्पनम्; अत्रापि व्याप्तिर्नापेक्षितेत्याशयः। अथ वा कारणाभावादिना कार्याभावादिज्ञानमभावः, भावनिष्ठव्याप्तिरेवानुमानाङ्गमित्याशयः॥ १॥

सिद्धान्तसूत्रम्—

* शब्द ऐतिह्यानर्थान्तरभावाद् अनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः॥ २॥

न प्रमाणचतुष्टस्य प्रतिषेधः शब्दे ऐतिह्यस्यानर्थान्तरभावाद्=अन्तर्भावात्, सामान्यत आप्तोक्तत्वज्ञानसम्भवात्। वस्तुत आप्तोक्तत्वज्ञानं न शब्दे कारणं, किन्त्वाकाङ्क्षादिज्ञानम्। योग्यताप्रमाधीना च शाब्दप्रमेति। अर्थापत्त्यादेरनुमानेऽन्तर्भावः। उपपादककल्पनं हि विना व्याप्तिज्ञानं न संभवति, वृष्टित्वादावपि मेघजन्यत्वव्याप्तिरस्त्येव। सम्भवोऽपि व्याप्तिमूलकत्वादनुमानं, व्याप्त्यनपेक्षत्वे च व्यभिचारादप्रमाणम्। एवमभावो व्याप्तिसापेक्षोऽनुमानम्; अभावनिष्ठव्याप्तेश्चानुमानाङ्गत्वे न विरोध इति भावः॥ २॥

सत्यर्थापत्तेः प्रामाण्ये बहिर्भावान्तर्भावचिन्ता, तदेव तु नास्तीति तटस्थः शङ्कते—

अर्थापत्तिरप्रमाणमनैकान्तिकत्वात्॥ ३॥

असति मेघे वृष्टिर्न भवतीत्यनेन सति मेघे वृष्टिर्भवतीत्यर्थापत्तिविषयः, तत्र च न प्रामाण्यं सत्यपि मेघे वृष्ट्यभावाद् अनैकान्तिकत्वात्॥ ३॥

समाधत्ते—

अनर्थापत्तावर्थापत्त्यभिमानात्॥ ४॥

अर्थापत्तेर्नानैकान्तिकत्वमिति शेषः। असत्सु मेघेषु न वृष्टिरित्यनेन सति मेघे वृष्टिरिति, तत्र च वृष्ट्या मेघज्ञानमभिमतं यत्र च मेघे न वृष्टिज्ञानं तत्रानर्थापत्तावर्थापत्तिभ्रमः। न चैतावता प्रामाण्यविरोधः, व्याप्त्यादिभ्रमात् भ्रमानुमितिदर्शनाद् अनुमानस्याप्य-

---

* ऐतिह्यादीनां प्रत्यक्षादिष्वन्तर्भावप्रदर्शनार्थं सूत्रम्।

प्रामाण्यापत्तेः। 'नानैकान्तिकत्वमर्थापत्तेः' इति भाष्यस्यावतरणिकां सूत्रादौ के चिल्लिखन्ति ॥ ४ ॥

प्रतिबन्दिमप्याह—

**प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥ ५ ॥**

त्वदुक्तरीत्या त्वदीयप्रतिषेधस्याप्यप्रामाण्यं स्यादनैकान्तिकत्वात् * यत्र कुत्रचिदनैकान्तिकत्वस्य प्रतिषेधासाधकत्वाद् अनैकान्तिकत्वात् ॥ ५ ॥

अथ यत्र कुत्रचिदनैकान्तिकत्वं न दोषाय, किन्तु स्वविषय इति यदि; तदार्थापत्तेरपि नाप्रामाण्यमित्याह—

**तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥**

अनैकान्तिकत्वस्य स्वविषये साधकत्वाद्यदि स्वहेतोः प्रामाण्यं मन्यसे, तदाऽर्थापत्तेरपि स्वविषये प्रामाण्यमिति ॥ ६ ॥

अभावस्य न प्रमाणेष्वन्तर्भाव इति तटस्थः शङ्कते—

**नाभावप्रामाण्यं प्रमेयासिद्धेः ॥ ७ ॥**

अभावनामकं प्रमाणं तदा स्याद्यदि तस्य प्रमेयं सिध्येत्, तदेव तु नास्ति। अभावस्य तुच्छत्वान्न तत्र प्रमाणप्रवृत्तिरिति भावः ॥ ७ ॥

सिद्धान्तसूत्रम्—

**लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेः ॥ ८ ॥**

तस्य=अभावप्रमाणस्य प्रमेयसिद्धिः=भावप्रधानो निर्देशः, किं तत्प्रमेयमित्यत्राह–लक्षितेष्विति। लक्षितेषु घटादिष्वलक्षितानां तत्प्रमेयत्वसिद्धिः। अलक्षितानां कथं प्रमेयत्वमत आह—लक्षणलक्षितत्वादिति। यद्यप्यभावस्य गुणकर्मादिभिर्लक्षणं न संभवति, तथाप्यलक्षणेनैव तल्लक्षितं भवति। अनीलमानयेत्युक्ते नीलाभावो हि इतरव्यावर्तकतया लक्षणम्, अतोऽभावो नाप्रामाणिक इति भावः ॥ ८ ॥

आक्षिप्य समाधत्ते—

**असत्यर्थे नाऽभाव इति † चेन्नान्यलक्षणोपपत्तेः ॥ ९ ॥**

---

* त्वया तु अर्थापत्तिविशेषः प्रतिषिध्यते, नार्थापत्तिमात्रमतः त्वदुक्तो हेतुः "अर्थापत्तिरप्रमाणमनैकान्तिकत्वात्" इत्येवानैकान्तोऽतः प्रमाणं न भवति इत्याशयः। † चेन्नान्यत्र० इति पाठान्तरम्।

असति प्रतियोगिन्यभावो वक्तुं न शक्यते, सति च प्रतियोगिनि कथं तदभाव इति चेत्, न, अन्यत्र लक्षणेन सत्त्वेनार्थात् प्रतियोगिन उपपत्तेरभावोपपत्तेः। नहि तत्रैव प्रतियोगिनः सत्त्वमपेक्षितम् ॥ ६ ॥

तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥

लक्षितेषु लक्षणस्य तत्सिद्धेः=व्यावर्त्तकत्वसिद्धेः,अलक्षितेषु=अभावेषु अहेतुः । अहेतुत्वं=व्यावृत्त्यहेतुत्वम् ,अभावस्य लक्षणाभावान्निःस्वरूपस्य न व्यावर्तकत्वमिति भावः ॥ १० ॥

समाधत्ते—

न लक्षणावस्थितापेक्षसिद्धेः ॥ ११ ॥

पूर्वपक्षो न युक्तः प्रतियोगिनो लक्षणस्य यदवस्थितम्=अवस्थानं तस्यापेक्षा यत्र तादृशसिद्धेः । अयमर्थः–प्रतियोगिस्वरूपज्ञानादेवाभावस्वरूपनिरूपणसम्भावान्नाभावलक्षणापेक्षेति भावः ॥ ११ ॥

प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥

प्रमेयसिद्धिरिति मण्डूकप्लुत्याऽनुवर्तते । प्रतियोगिन उत्पत्तेः प्राग् अभावस्योपपत्तेरुपलम्भात्, घटो भविष्यतीत्यादिप्रागभावविषयकप्रत्यक्षस्य सार्वलौकिकत्वादिति भावः। चकारेण ध्वंसादेरपि प्रत्यक्षसिद्धत्वं समुच्चीयते। चेष्टाया निर्व्यापारत्वेन न प्रामाण्यं। वस्तुतो लिप्यादिवत् साङ्केतिकत्वात् तस्या अप्यनुमाने शब्दे वाऽन्तर्भाव इति ॥ १२ ॥

समाप्तं प्रमाणचतुष्कप्रकरणम् ॥१॥

वेदस्य प्रामाण्यमाप्तप्रामाण्यात् सिद्धं, न चेदं युज्यते वेदस्यनित्यत्वादित्याशङ्कायां वर्णानामनित्यत्वात् कथं तत्समुदायस्वरूपस्य वेदस्य यित्यत्वमित्याशयेन शब्दानित्यत्वप्रकरणमारभते । तत्र सिद्धान्तसूत्रम्—

*** आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च †॥ १३ ॥**

शब्दोऽनित्य इत्यादि पूरणीयम्। ‡आदिमत्त्वात्=सकारणकत्वात्। ननु न सकारणकत्वं¶ कण्ठताल्वाद्यभिघातादेर्व्यञ्जकत्वेनाऽप्युपपत्तेः, अत आह—ऐन्द्रियकत्वादिति। सामान्यवत्त्वे सति बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वादित्यर्थः। परे तु—ऐन्द्रियकत्वं लौकिकप्रत्यक्षविशेष्यत्वं, सामान्यसमवाययोस्तु न तथात्वं, जातित्वादिना विशेष्यत्वसम्भवेऽपि जातित्वादेरप्रत्यक्षत्वान्न व्यभिचारः। मनस इन्द्रियत्वाभावाच्च नात्मनि व्यभिचारः, आत्मन ऐन्द्रियकत्वाभावाद्वेत्याहुः। अप्रयोजकत्वमाशङ्क्याह–कृतकेति। कृतके घटादौ यथा उपचारो=ज्ञानं, तथैव कार्यत्वप्रकारकप्रत्यक्षविषयत्वादित्यर्थः। तथा च कार्यत्वेनानाहार्यसार्वलौकिकप्रत्यक्षबलादनित्यत्वमेव सिध्यति। केचित्तु—उपचाराद्विनाशित्वात् कृतकवदिति दृष्टान्त इति। परे तु कृतकवदुपचारात्=कृतकसुखदुःखादिवद्व्यवहारात्। यथाहि ×सुखादौ तीव्रमन्दादिव्यवहारः, शब्देऽप्येवं, न तु नित्ये तथेत्याहुः॥१३॥

यथाश्रुते हेतूनां व्यभिचारमाशङ्कते—

**न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च + ॥ १४ ॥**

नोक्ता हेतवः। घटाभावस्य=घटध्वंसस्य नित्यत्वाद्=अविनाशि-

* अस्मात् पूर्वं 'विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः' इति एकं सूत्रं भाष्ये वार्तिके चोपलभ्यते। श्रीमद्गङ्गाधरशास्त्रिणः "मुद्रितपुस्तकेऽस्य सूत्रत्वेन लेखः प्रामादिकः" इति प्रतिपादितवन्त, प्रमाणं तु किमपि न दत्तवन्तः।

† "कृतकवदुपचाराच्चेति विश्वनाथसम्मतः पाठः" इति केषांचिन्मतं, तन्मन्दं प्रमाणाभावात्।

‡ अनित्यः शब्दः आदिमत्त्वात्=सकारणकत्वात्, घटवत् इत्यनुमानम्।

¶ नित्यः शब्दः संयोगव्यङ्ग्यत्वात् रूपवत्, इति शब्दनित्यत्वसाधनेऽनुमानप्रयोगः।

× अस्यानुमानप्रयोगः—शब्दोऽनित्यः तीव्रमन्दशब्दविषयत्वात् सुखादिवत् इति।

+ सूत्रस्य पूर्वहेतूनामनैकान्तिकत्वज्ञापनमर्थः। (न्या॰ वा॰)।

त्वाद् आदिमत्त्वं व्यभिचारि; ऐन्द्रियकत्वं सामान्ये व्यभिचारि: नित्येष्वप्यनित्यवद् उपचारात्, यथा—घटाकाशमुत्पन्नम्, अहं सुखी जात इत्यादि ॥ १४ ॥

प्रथमे व्यभिचारं परिहरति—

**तत्त्वभाक्तयोर्नानात्वविभागाद् अव्यभिचारः ॥१५॥**

तत्त्वस्य = पारमार्थिकस्य भाक्तस्य च नानात्वस्य = भेदस्य विभागाद्=विवेकात् न व्यभिचारः। ध्वंसे हि उत्पत्तिमत्त्वलक्षणम् आदिमत्त्वं, त्रैकालिकत्वरूपनित्यत्वाभावरूपं चानित्यत्वमस्त्येव, अविनाशित्वत्वान्नित्यत्वमौपचारिकम्, * अतो न व्यभिचारः। आदिमत्त्वं प्रागभावावच्छिन्नसत्त्वं, न चैतदभावे इति वार्थः ॥१५॥

द्वितीये व्यभिचारमुद्धरति—

**सन्तानानुमानविशेषणात् ॥ १६ ॥**

सन्तानस्यानुमाने=अनुमितिकरणे लिङ्गे विशेषणात्। सन्तानः सन्तन्यमानः एकधर्मावच्छिन्नत्वेन ज्ञायमानः, तेन † सामान्यवत्त्वे सतीति विशेषणीयम् इति ॥ १६ ॥

तृतीये व्यभिचारं वारयति—

**कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् नित्येष्व-प्यव्यभिचार इति ॥ १७ ॥**

आकाशे हेतुर्नास्त्येव। आकाशे प्रादेशिकत्वव्यवहारस्तु ‡ गौणः,

* उभयान्तपरिच्छिन्नवस्तुसत्तासम्बन्धो हि नित्यत्वं, तच्च न प्रध्वंसाभावेऽस्तस्याविनाशसामान्यमूलकं भाक्तं नित्यत्वम् ॥

† 'शब्दोऽनित्यः बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वात्' इत्यत्र हेतौ 'सामान्यवत्त्वे सति' इति विशेषणं देयं, तेन सामान्ये न व्यभिचारः सामान्ये सामान्यवत्त्वाभावात् इति। उद्योतकराचार्यः अस्य सूत्रस्य तात्पर्यं 'न वयमैन्द्रियकत्वेनानित्यत्वं प्रतिपादयामः, अपितु शब्दस्य अभिव्यक्तिं प्रतिषेधामः। नहि व्यज्यमानस्यैन्द्रियकत्वं युक्तमिति' आहुः।

‡ संयोगाव्याप्यवृत्तिसामान्यमूलकः आकाशप्रदेशव्यपदेशः। न च आकाशस्य निष्प्रदेशत्वे तद्गतशब्दस्य सर्वैरुपलब्धिप्रसंग इति वाच्यं, शब्दस्याव्याप्यवृत्तित्वात्।

प्रदेशशब्देन कारणद्रव्यस्य=कारणवतो द्रव्यस्याभिधानात्। * न त्वाकाशं तादृशं, तादृशत्वे वा साध्यसत्त्वात् न व्यभिचारः। एवं सुखी जात इत्यादौ सुखाद्युत्पत्तिरेव विषय इति भावः॥ १७॥

न चोक्तहेतूनामप्रयोजकत्वं विपक्षबाधकसत्त्वादित्याह—

प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥१८॥

शब्दो यदि नित्यः स्यात्, उच्चारणात् प्रागप्युपलभ्येत श्रोत्रसन्निकर्षसत्त्वात्। न चात्र प्रतिबन्धकमस्तीत्याह— आवरणेति। आवरणादेः=प्रतिबन्धकस्यानुपलब्ध्याऽभावनिर्णयात्, देशान्तरगमनं तु शब्दस्यामूर्तत्वात् न संभाव्यते, अतीन्द्रियानन्तप्रतिबन्धकत्वकल्पनामपेक्ष्य शब्दानित्यत्वकल्पनैव लघीयसीति भावः॥ १८॥

आन्तस्य पूर्वपक्षपरं सूत्रद्वयम्—

तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः॥ १९॥

अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात्॥ २०॥

यथा त्वयाऽऽवरणस्याऽनुपलब्ध्याऽभाव इत्युच्यते, तथाऽऽवरणानुपलब्धेरनुपलम्भात्तदभाव आवरणोपलब्धिरेव स्यात्। यदि वाऽऽवरणानुपलब्धेरनुपलम्भेऽपि नावरणानुपलब्धेरभावस्तदाऽऽवरणस्यानुपलम्भादपि नावरणस्यानुपपत्तिरित्यर्थः॥१९॥२०॥

सिद्धान्तसूत्रम्—

अनुपलम्भात्मकत्वाद् अनुपलब्धेरहेतुः † ॥२१॥

---

* आकाशस्य निष्प्रदेशत्वेऽनुमानम्—निष्प्रदेशमाकाशं व्यापकत्वाद् आत्मवत्।

† "अतथाजातीयेन प्रत्यवस्थानादनुत्तरमिति सूत्रार्थः। यथाजातीयकः शब्दो नित्यस्तथाजातीयकं किंचिन्नित्यं न दृष्टमिति। उक्तं चात्र—'उभयान्तापरिच्छिन्नवस्तुसत्तासम्बन्धो नित्यतेति। तस्मादयथार्थप्रत्यवस्थान्न किंचिदेतत्। अनित्यः शब्दो गुणत्वे सत्यस्मदादीन्द्रियविषयत्वात् बुद्धिवत्, अव्यापकस्य द्रव्यसमवायित्वे सति अप्रत्यक्षत्वात् सुखवत्। आकाशनिष्प्रदेशत्वे हेतुः—निष्प्रदेशमाकाशं व्यापकत्वाद्, द्रव्यस्यसतः सर्वदाऽमूर्त्तत्वादात्मवत्। व्यापकत्वा

आवरणानुपलब्धेरनुपलम्भादावारणोपलब्धिरिति जात्युत्तरम्=अहेतुः=न मन्मतप्रतिषेधसाधनम्। अनुपलब्धेः=आवरणानुपलब्धेः, अनुपलम्भात्मकत्वाद्=उपलम्भाभावात्मकत्वात्, तस्य च मनसैव सुग्रहत्वात्, तदनुपलब्धिरसिद्धेति भावः॥ २१॥

सत्प्रतिपक्षमाशङ्कते—

**अस्पर्शत्वात्॥ २२॥**

शब्दो नित्यः अस्पर्शत्वाद् गगनवदिति भावः॥ २२॥

न सत्प्रतिपक्षस्त्वदीयहेतोरनैकान्तिकत्वादित्याह—

**न कर्मानित्यत्वात्॥ २३॥**

अस्पर्शत्वं न शब्दनित्यत्वसाधकं कर्मणि व्यभिचारात्॥ २३॥

अनैकान्तिकमपि साधकं स्याद् अत्राह—

**नाणुनित्यत्वात्॥ २४॥**

अनैकान्तिकस्य साधकत्वेऽणोः=परमाणोर्नित्यत्वं न स्याद्रूपवत्त्वादिना तत्रानित्यत्वानुमानापत्तेरित्यर्थः॥ २४॥

**संप्रदानात्॥ २५॥**

गुरुणा शिष्याय विद्यायाः सम्प्रदानात्। तथा च शब्दस्य प्राक्सत्त्वं सिद्धं। तथा च "तावत्कालस्थिरं चैनं कः पश्चान्नाशयिष्यति" इति न्यायान्नित्यत्वमर्थसिद्धमिति भावः॥ २५॥

सिद्धान्तसूत्रम्—

**तदन्तरालानुपलब्धेरहेतुः॥ २६॥**

शिष्ये उपसन्ने गुरुरध्यापयति। यदि च शब्दो नित्यः स्यात्तदा शिष्यागमनानन्तरमध्यापनात् पूर्वमपि शब्द उपलभ्येतेत्यनुपलब्ध्या च नास्ति शब्द इत्यतस्त्वदुक्तो न हेतुः॥ २६॥

पूर्वपक्षसूत्रम्—

**अध्यापनादप्रतिषेधः॥ २७॥**

देशाकृतकत्वम्। व्यापकत्वं च द्रव्यस्यसतः सर्वदोऽमूर्तत्वम्। एतेन दिक्कालौ व्याख्यातौ। एतावत्त्वसाधनमनित्यः शब्दः" इति (न्या० वा०)

मदीयहेतोः प्रतिषेधो न युक्तः अध्यापनात्; यद्यन्तरालकाले शब्दो न स्यात्, कथमध्यापनं घटेत? अनुपलब्धिस्तु शब्दस्य कण्ठताल्वाद्यभिघातरूपव्यञ्जकाभावादुपपद्यत इति भावः। आचार्य्यास्तु सूत्रद्वयमेवं व्याचक्षते—"विभक्तिव्यत्यासाद् अहेतोस्तदन्तरालानुपलब्धिरर्थः तथा च हेतोः स्वत्वस्याभावात् तदन्तरालस्य स्वत्वध्वंसस्यानुपलब्धिः, अतो न दानमित्यर्थः; प्रतिषेधो न युक्तः। नहि दानं ममाभिप्रेतं,किं त्वध्यापनं; तच्च विद्यमानस्य शब्दस्यैवेति भावः" ॥ २७ ॥

सिद्धान्तसूत्रम्—

* **उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥२८॥**

अन्यतरस्य पक्षस्यानित्यत्वसाधकस्याध्यापनाद्यः प्रतिषेधः, स न संभवति, उभयोः पक्षयोरध्यापनस्य समानत्वादिति शेषः। अध्यापनं हि गुरूच्चारणानूच्चारणं, शिष्योच्चरणानुकूलोच्चारणं वा; तच्च स्थैर्यास्थैर्य्यपक्षयोस्तुल्यं, न शब्दनित्यतायाः साहायकं विधातुमलम्। न ह्यध्यापनं दानं येन स्वस्वत्वध्वंसपरस्वत्वापादनार्थं स्थैर्य्यमाशङ्कनीयम्। न वा दानं संभवति बहूनामेकदा स्वत्वविरोधात् परस्वत्वदानासंभवाच्च, अपि तु † नृत्याध्यापनादाविवोपदेशमात्रमिति भावः ॥ २८ ॥

पूर्वपक्षसूत्रम्—

**अभ्यासात् ॥ २९ ॥**

यद्धि स्थिरं, तदभ्यस्यमानं दृष्टम्; यथा दशकृत्वो रूपं पश्यति, एवं शतकृत्वोऽनुवाकमधीत इत्यभ्यासात् स्थैर्य्यं शब्दस्येति भावः ॥ २९ ॥

उत्तरयति—

**नान्यत्वेऽप्यभ्यासस्योपचारात् ॥ ३० ॥**

पूर्वपक्षो न युक्तः। कुतः? अन्यत्वे = भेदेऽपि शब्दानाम् अध्यापनाभ्यासस्य उपचारात् = संभवात्। नह्यभ्यासः स्थैर्य्यं

---

* केचित्तु नेदं सूत्रमिति वदन्ति प्रमाणं तु न ददति।

† दात्रोच्चारितः शब्दः संतानवृत्त्या संप्रदानमेतीति न भवस्थानेऽध्यापनं हेतुरित्याशयः।

साधयति, द्विर्जुहोति त्रिर्नृत्यतीत्यादौ भेदेऽप्यभ्यासदर्शनादिति भावः * ॥ ३० ॥

अन्यतैव जगति नास्तीति कथमन्वत्वेऽप्यभ्यासोपपत्तिरिति तटस्थ आशङ्कते—

**अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः ॥३१॥**

यद्वस्त्वन्यस्मादन्यदुच्यते, तत् स्वस्मादनन्यद् = अभिन्नम् । तत् कथमन्यद् ? भेदाभेदयोर्विरोधादिति भावः । स्वाभेदस्यावश्यकत्वमिति हृदयम् ॥ ३१ ॥

समाधत्ते—

**तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षासिद्धेः ॥३२॥**

तदभावे=ऽन्यत्वस्याभावेऽनन्यतापि नास्ति तयोर्भेदाभेदयोः सिद्धेः परस्परसापेक्षत्वात् । वस्तुतस्तु तयोर्मध्ये इतरस्य = एकतरस्य अनन्यत्वस्येतरापेक्षसिद्धेः इतरत्वस्य=भेदस्यज्ञानापेक्षसिद्धिर्यस्य तादृशत्वादित्यर्थः ॥ ३२ ॥

शङ्कते—

**विनाशकारणानुपलब्धेः ॥ ३३ ॥**

शब्दो नित्य इत्यादिः ॥ ३३ ॥

अनुपलब्धिरप्रत्यक्षमज्ञानं वा ? आद्ये प्रतिबन्दिमाह—

**अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३४ ॥**

यद्यप्रत्यक्षत्वादभावसिद्धिस्तदाऽश्रवणकारणस्याप्रत्यक्षत्वादश्रवणं न स्यादिति सततश्रवणप्रसङ्ग इत्यर्थः ॥ ३४ ॥

द्वितीये त्वाह—

**उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥ ३५ ॥**

अनुमानादिना उपलभ्यमाने विनाशकारणे अनुपलब्धेरभावात् त्वदीयो हेतुरनपदेशः=असाधकः । असिद्धत्वात् जन्यभावत्वेन विनाशकल्पनमिति भावः ॥ ३५ ॥

सिद्धान्तिनः सूत्रान्तरम्—

**पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३६ ॥**

* अनित्येष्वप्यभ्यासदर्शनात् 'अभ्यासात्' इति हेतुरनैकान्त इत्याशयः ।

शब्दायमाने कांस्यादौ पाणिरूपनिमित्तस्य प्रश्लेषात्=संयोगात् शब्दाभावे उपलभ्यमाने शब्दाभावकारणस्य नानुपलब्धिरिति यथाश्रुतानुयायिनः। परे तु पाणिरूपनिमित्तस्य प्रश्लेषः=सम्बन्धो यत्र स पाणिजः शब्दः अर्थात् उत्तरशब्दः, ततः शब्दाभावे शब्दध्वंसे सति न विनाशकारणानुपलब्धिरित्यर्थः इत्याहुः। अन्ये तु—पूर्वसूत्रे शब्दस्य तावद्वेगात्मकः संस्कारविशेषो हेतुस्तस्य तीव्रतीव्रतरमन्दमन्दतरत्वाच्छब्दोऽपि तादृशः, तत्र चोत्तरोत्तरशब्दानां पूर्वपूर्वशब्दनाशकत्वं कल्प्यत इत्यर्थः। ननु तादृशसंस्कार एव नास्तीत्यत्राह—पाणीति। नानुपलब्धिः संस्कारस्येति शेषः। पाणिनिमित्तस्य प्रश्लेषात्=घण्टादिसंयोगात् संस्काररूपकारणाभावद्वारा शब्दाभावे=शब्दानुत्पत्तौ नानुपलम्भः संस्कारस्येत्यर्थ इत्याहुः * ॥३६॥

ननु घण्टादिपाणिसंयोगस्य शब्दनिर्वर्त्तकत्वे घण्टाद्याश्रय एव शब्दः स्यादित्याशङ्कायामाह—

† अस्पर्शत्वादप्रतिषेधः ॥ ३७ ॥

उक्तः प्रतिषेधो न संभवति अस्पर्शत्वात्, शब्दाश्रयस्येति शेषः। शब्दो हि न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभाववदकारणगुणपूर्वककार्य्यत्वादित्याशयः ॥ ३७ ॥

एतदेव व्युत्पादयितुमाह—

विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३८ ॥

* यदि संस्कारं शब्दोत्पत्तिनिमित्तं न प्रतिपद्यते भवान्, तर्हि 'पाणिघण्टासंश्लेषात्कथं शब्दसन्तानोच्छेदः' इति प्रतिपाद्यताम्, अतोऽस्ति संस्कारस्तत्र यः पाणिघण्टासंश्लेषात् निवर्तते, यस्य च निवृत्तौ शब्दसन्तानोच्छेदः इति भावः।

† अस्पर्श० इति सूत्रात्पूर्वं "विनाशकारणोपलब्धेश्चावस्थाने तन्नित्यत्वप्रसंगः" इत्येकं सूत्रं भाष्यादौ व्याख्यातमस्ति। परमत्र वृत्तिकृता तन्नोल्लिखितं न च व्याख्यातं, तस्य व्याख्या भाष्यकारकृताऽत्रोपन्यस्यते:—

"यदि यस्य विनाशकारणं नोपलभ्यते, तदवतिष्ठते; अवस्थानाच्च तस्य नित्यत्वं प्रसज्यते एवं यानि खलु इमानि शब्दश्रवणानि शब्दाभिव्यक्तयः इति मतं. न तेषां विनाशकारणं भवता उपपाद्यते, अनुपपादनादवस्थानं, अवस्थानात्तेषां नित्यत्वं प्रसज्यते ॥"

समासे=स्पर्शादिसमुदाये साहित्येन शब्दो वर्तत इति न युक्तं विभक्त्यन्तरस्य=विभागान्तरस्य तारमन्दादेरुपपत्तेः। अयमर्थः-एकस्मिन्नेव शंखादौ तारमन्दादिनानाशब्दा जायन्ते गन्धादयस्तु विनाऽग्निसंयोगं न परावर्तन्त इति भावः ॥ ३८ ॥

समाप्तं शब्दानित्यत्वप्रकरणम् ॥ २ ॥

प्रसङ्गाच्छब्दपरिणामवादं दूषयितुं संशयं दर्शयति—

विकारादेशोपदेशात् संशयः ॥ ३९ ॥

विकारोपदेशादादेशोपदेशाच्च संशयः 'इको यणचि' इत्यादिना इकारादेर्विकारो यकारादिरिति सांख्या व्याचक्षते। परे तु इकारे प्रयोक्तव्ये यकारः प्रयोक्तव्य इत्यादेशं समादिशन्ति। अतश्च वर्णा विकारिणो न वेति संशयः। विकारश्च स्वरूपस्य विनाशेऽविनाशे वा द्रव्यान्तरारम्भकत्वं, यथा दुग्धादेर्दध्याद्यारम्भकत्वं, वीजादेर्वृक्षाद्यारम्भकत्वं च, सुवर्णादेरपि लोहाभिघातजन्यावयवसंयोगनाशादवयविनो नाशे सत्येव कुण्डलाद्यारम्भकत्वं, कपालादेश्च स्वरूपविनाशेन घटाद्यारम्भकत्वम् * ॥ ३९ ॥

---

* अत्र भाष्यकारः "आदेशोपदेशस्तत्त्वम्" इति उक्त्वा तद्द्रढयितुं कांश्चिद्युक्तीराह, तद्यथा—'विकारोपदेशे हि अन्वयाग्रहणादविकारानुमानम्=सत्यन्वये किञ्चिन्निवर्तते किंचिदुपजायते इति शक्यत विकारोऽनुमातुम्। न चान्वयो गृह्यते तस्माद्विकारो नास्तीति ॥ भिन्नकरणयोश्च वर्णयोरप्रयोगे प्रयोगोपपत्तिः=विवृतकरण इकारः ईषत्स्पृष्टकरणो यकारः ताविमौ पृथक्करणाख्येन प्रयत्नेनोच्चारणीयौ तयोरेकस्याप्रयोगेऽन्यतरस्य प्रयोगः उपपन्न इति ॥ अविकारे चाविशेषः=यत्रेमौ इकारयकारौ न विकारभूतौ यतते, यच्छति प्रायँस्त इति, इकार इदमिति च। यत्र च विकारभूतौ इष्ट्वा दध्याहर इति, उभयत्र प्रयोक्तुरविशेषो यत्नः श्रोतुश्च श्रुतिरित्यादेशोपपत्तिः ॥ प्रयुज्यमानाग्रहणाच्च=न खलु इकारः प्रयुज्यमानो यकारतामापद्यमानो गृह्यते, किं तर्हि? इकारस्य प्रयोगे यकारः प्रयुज्यते। तस्मादविकार इति ॥ अविकारे च न शब्दान्वाख्यानलोपः=न विक्रियन्ते वर्णा इति। न चैतस्मिन्पक्षे शब्दान्वाख्यानस्यासंभवो येन वर्णविकारं प्रतिपद्येमहीति। न खलु

तत्र विकारनिराकरणाय सूत्रम्—

प्रकृतिविवृद्धौ विकारविवृद्धेः ॥ ४० ॥

न वर्णा विकारिणः, तथा सति तत्प्रकृतेरुपादानत्वाभिमतस्य विवृद्ध्या विकारस्यापि विवृद्ध्यापत्तेः। महदल्पावयवारब्धावयविनो महदल्पत्ववत् ह्रस्वेकारारब्धयकारापेक्षया दीर्घकाराऽऽरब्धयकारस्य विवृद्धिः स्यादित्यर्थः। तस्मादादेशपक्षः श्रेयानिति भावः ॥ ४० ॥

आक्षिपति—

न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ॥४१॥

उक्तो हेतुर्न युक्तः विकाराणां प्रकृत्यपेक्षया न्यूनत्वस्य समत्वस्याधिकत्वस्य चोपपत्तेः दर्शनात्। यथा तूलकपरिमाणापेक्षया तद्विकारस्तन्तुरल्पपरिमाणः, यथा वा न्यग्रोधबीजादुत्कृष्टेन नारिकेलीबीजेन न्यग्रोधादल्पो नारिकेलीतरुर्जन्यते. कनकादिसमपरिमाणं कटकादि; यथा वा न्यूनाधिकनारिकेलीबीजाभ्यां समौ वृक्षौ, न्यूनपरिमाणाद् वटबीजाच्च महान् वटतरुरिति ॥ ४१ ॥

समाधत्ते—

नातुल्यप्रकृतीनां विकारविकल्पात् ॥ ४२ ॥

नोक्तं समाधानं युक्तम्। अतुल्यप्रकृतीनां = भिन्नप्रकृतीनां हि विकाराणां विकल्पो = वैलक्षण्यं मयाऽभिहितं; नहि बीजादेर्ह्रासवृद्ध्यादिना वृक्षादेर्ह्रासवृद्ध्यादिकं प्रक्रान्तं। मदुक्तवैलक्षण्यन्तु तत्राप्यस्ति, तथा च त्वदुक्तमुपचारच्छलम् इति भावः ॥ ४२ ॥

शङ्कते—

द्रव्यविकारे वैषम्यवद्वर्णविकारविकल्पः ॥४३॥

वर्णस्य वर्णान्तरं कार्यं, नहि इकाराद्यकार उत्पद्यते, यकाराद्वा इकारः। पृथक्स्थानप्रयत्नोत्पाद्या हि इमे वर्णाः, तेषामन्योऽन्यस्य स्थाने प्रयुज्यते इति युक्तम्। एतावच्चैतत्परिणामो विकारः स्यात्, कार्यकारणभावो वा, उभयं च नास्ति। तस्मान्न सन्ति वर्णविकाराः ॥ वर्णसमुदायविकारानुपपत्तिवच्च वर्णविकारानुपपत्तिः=अस्तेर्भूः, ब्रवो वचिरिति यथा वर्णसमुदायस्य धातुलक्षणस्य क्वचिद्विषये वर्णान्तरसमुदायो न परिणामो न कार्यं, शब्दान्तरस्य स्थाने शब्दान्तरं प्रयुज्यते तथा वर्णस्य वर्णान्तरमिति ॥"

द्रव्यत्वे न्यग्रोधादिप्रकृतीनां तुल्यत्वेऽपि विकारवैषम्यं यथा; एवमेव वर्णत्वेन तुल्ययोरपि ह्रस्वदीर्घयोर्यो विकारो यकारस्तस्य विकल्प ऐकरूप्यं नानुपपन्नमित्यर्थः ॥ ४३ ॥

समाधत्ते—

**न विकारधर्मानुपपत्तेः ॥ ४४ ॥**

नात्र द्रव्यविकारतुल्यता। विकाराणां हि अयं धर्मो, प्रकृत्यनुविधानं तद्भेदे भेद इति। प्रकृते च तदनुपपत्तिः, ह्रस्वत्वदीर्घत्वादिना प्रकृतिभेदेऽपि कार्य्यभेदाभावात् ॥ ४४ ॥

इतश्च न विकार इत्याह—

**विकारप्राप्तानामपुनरावृत्तेः ॥ ४५ ॥**

विकारप्राप्तस्य न पुनः प्रकृतिरूपता दृष्टा। न खलु दधि क्षीरतां पुनरापद्यते। इकारस्तु यकारतां प्राप्तः पुनरिकारतामापद्यते, 'दध्यत्र' इत्युक्त्वा पुनरपि 'दधि अत्र' इत्युच्यते एवेति भावः ॥ ४५ ॥

आक्षिपति—

**सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ४६ ॥**

उक्तो हेतुर्न युक्तः। सुवर्णादिकं हि कटकीभावं विहाय कुण्डलतामापन्नं पुनः कटकतामापद्यत एवेति भावः* ॥ ४६ ॥

निराकरोति—

**न तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥ ४७ ॥**

सुवर्णविकारस्थले हि सुवर्णत्वादिना प्रकृतिता, न तु कटकत्वादिना। तत्रोभयमपि सुवर्णभावं न जहाति। यदि हि सुवर्णतामपहाय कटतामापन्नं पुनः सुवर्णतामपद्येत, तदा व्यभिचारः शङ्क्येत, न चैवं, प्रकृते तु इकारतां हित्वा यकारतां प्राप्तस्यापीकारतापत्तिरस्त्येवेति, दोषो दुष्परिहर इति भावः † ॥ ४७ ॥

* विकारप्राप्तानां पुनरापत्तिदर्शनात् त्वदुक्तो हेतुरनेकान्तः इत्याशयः।

† सर्वत्रस्थं सुवर्णदर्शनं, न पुनरिकारयकारयोर्धर्मयोः कश्चिद्वर्णात्मा अवस्थितो भवति, य इकारं हित्वा यत्वमापद्यते इति आशयः।

अविकारे मूलयुक्तिमाह—

* नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् † ॥४८॥

वर्णानां नित्यत्वे विकारासंभवादनित्यत्वे चाचिरस्थायित्वेनेकार-प्रत्यक्षानन्तरमिकारनाशाद्विकारानुपपत्तिरित्यर्थः ॥ ४८ ॥

अत्र जातिवादी नित्यत्वमतमालम्ब्य परिहरति—

नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविका-रणामप्रतिषेधः ‡ ॥ ४९ ॥

विकाराणां प्रतिषेधो न युक्तः नित्यानां धर्मविकल्पाद् = धर्मस्य नानाविधत्वादतीन्द्रियत्वाद् । चकारेणेन्द्रियकत्वं समुच्चीयते । यथा हि नित्यानामाकाशादीनामतीन्द्रियत्वम्, ऐन्द्रिकयत्वेऽपि गो-त्वादीनां नित्यत्वम्, एवमन्येषां नित्यानामविकारित्वेऽपि वर्णानां विकारित्वं स्यादिति ॥ ४९ ॥

अनित्यत्वमालम्ब्य स आह—

अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः § ॥५०॥

अनवस्थायित्वेऽपि वर्णानां यथा प्रत्यक्षं भवति, एवं विकारोऽपि स्यादिति भावः ॥ ५० ॥

उभयत्रोत्तरयति—

विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥ ५१ ॥

उक्तः प्रतिषेधो न युक्तः विकारधर्मित्वे ¶ नित्यत्वासम्भवात् ।

---

* अस्मात्सूत्रात्पूर्वं कालिकामुद्रितभाष्ये वार्तिके च "वर्णत्वव्यतिरेकाद् वर्णविकाराणामप्रतिषेधः" "सामान्यवतो धर्मयोगो न पुनः सामान्यस्य" चेति सूत्रद्वयमुपलभ्यते ।

† "नित्या वर्णा इति न युक्तो विकारो व्याघातात्। अनित्याः वर्णा इति न युक्तो विकारोऽनवस्थितानां विकारादर्शनात् ॥ ( न्या वा० )

‡ 'विकल्पसमा जातिः। ( न्या० वा० )

§ 'साधर्म्यसमा जातिः ( न्या० वा० )

¶ 'नित्या विक्रियन्ते इति व्याघातो दोषः । उपलभ्यमानस्य चेकारस्य त्वानुपपत्तेर्वर्णोपलब्धिवादित्यसंबद्धम् । ( न्या० वा० )

विकारो ह्यत्र स्वरूपपरित्यागेन रूपान्तरापत्तिः। तथात्वे च नित्यत्वविरोधात्। नहि घटादेः कपालाद्युपादेयत्ववत् प्रकृते संभवति, यकारकाले इकारानुपलब्धेः॥ अनित्यत्वपक्षेऽपि प्रतिषेधो न युक्तः, प्रत्यक्षं हि वर्णस्य द्वितीयक्षणे युज्यते। विकारस्तु कालान्तरीयो न युज्यते दधीतिशब्दानन्तरमत्रेत्यादिशब्देन तस्य नाशादिति भावः॥ ५१॥

इतश्च विकारानुपपत्तिरित्याह—

प्रकृत्यनियमात् वर्णविकाराणाम्॥ ५२॥

विकाराणां हि प्रकृतिनियमो यथा क्षीरदध्नोः प्रकृतिविकारभावो, न तु वैपरीत्यम्। प्रकृते तु दध्यत्रेत्यादौ इकारो यकारप्रकृतिः, विध्यतीत्यादौ तु यकार इकारप्रकृतिरिति भावः॥५२॥

अत्र छलवादी शङ्कते—

अनियमे नियमान्नानियमः॥ ५३॥

अनियमो य उक्तः स न युक्तः। कुतः? अनियतत्वस्य नियमादित्यर्थः॥ ५३॥

समाधत्ते—

नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेध॥५४॥

अनियमे नियमाद्यस्त्वयाऽनियमप्रतिषेधः कृतः, स न युक्तः नियमानियमयोर्विरोधात्। अनियमो हि नियमाभावः,तस्मिन् सति नियमासंभवादिति भावः॥ ५४॥

तदेवं वर्णानां प्रकृतिविकारभावं निरस्य स्वपक्षे विकारव्यवहारमुपपादयति—

गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु
विकारोपपत्तेर्वर्णविकारः॥ ५५॥

तुशब्दः पुनरर्थे। एतेभ्यः पुनर्वर्णविकारोपपत्तेर्वर्णविकारस्य एकवर्णप्रयोगे वर्णान्तरप्रयोगस्य उपपत्तेर्वर्णविकार इति व्यवह्रियते, तानेवाह-गुणान्तरेति। गुणान्तरापत्तिः—धर्मिणि सत्येव धर्मान्तरापत्तिः, यथोदात्ते ऽनुदात्तत्वम्, उपमर्दो-धर्मिनिवृत्तौ धर्मान्तरप्रयोगः,यथास्तेर्भूः, ह्रासो-दीर्घस्य ह्रस्वत्वं, वृद्धिःअर्थात् ह्रस्वस्य दीर्घत्वं,

लेशः अल्पत्वं, यथा अस्तेरकारलोपः, श्लेषः आगमः, एतैः कारणैः विकारव्यवहार इति ॥ ५५ ॥

समाप्तं शब्दपरिणामप्रकरणम् ॥ ३ ॥

शाब्दबोधे पदजन्यपदार्थोपस्थितेर्हेतुत्वात् तद्व्युत्पादनाय पदार्थे निरूपणीये पदमादौ निरूपयति—

**ते विभक्त्यन्ताः पदम् ॥ ५६ ॥**

ते वर्णा विभक्त्यन्ताः पदम् । बहुत्वमविवक्षितं । विभक्तेश्च सत्त्वमनपेक्षितम् । विभक्तिः सुप्तिङ्रूपा । वस्तुतस्तु नेदं पदं शाब्दबोधोपयोगि, किं त्विदमाकाङ्क्षास्वरूपम्, अथवा विभक्तिः= वृत्तिः=अन्तःसंबन्धस्तेन वृत्तिमत्त्वं पदत्वम् । इत्थं च पदं निरूप्य तदर्थनिरूपणं संगच्छते । यत्तु प्रसङ्गात् पदार्थनिरूपण- मिति, तन्न पदनिरूपणस्यासंगतत्वापत्तौ एकसूत्रस्य प्रकरणत्वा- भावात् ॥ ५६ ॥

तत्र पदे निरूपिते तद्वाच्यत्वं पदार्थत्वन्निरूपितं, तत्रापि धा- त्वाद्यर्थस्य निर्विवादत्वाद्गवादिपदार्थं निरूपयितुमाह—

**तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः ॥ ५७ ॥**

व्यक्तिः=गवादिः, जातिः=गोत्वादिः,=आकृतिः=अवयवसंस्थान- विशेषः, तेषां सन्निधिः = सामीप्यं = मिलनं तत्र सति उपचारात्= ज्ञानात् । तथा च त्रयाणां युगपत् प्रत्ययात् किमितेषां प्रत्येकं पदार्थः, उत समस्तमिति संशय इत्यर्थः । इदं भाष्यमिति केचित्, वस्तुतस्तु तत्वबोधादिस्वरसात् सूत्रमेव, 'तदर्थे' इत्यंशस्तु भाष्यकृतः पूरणमिति प्रतिभाति ॥ ५७ ॥

तत्र व्यक्तिवादिनो मतमाह—

**याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्युपचयवर्णसमा- सानुबन्धानां व्यक्तावुपचारद् व्यक्तिः ॥ ५८ ॥**

पदार्थ इति शेषः । उक्तानामुपचारात्=व्यवहारात् * अनुबन्धः प्रजननं । या गौर्गच्छतीत्यादिव्यवहारो व्यक्तावेव जात्याकृत्योरमूर्त्तत्वात्; एवं गवां समूहः, गां ददाति, गां प्रतिगृह्णाति, दश गावः, गौर्वर्द्धते, कृष्णा गौः कपिलागौः, गोहितं, गौः प्रसूत इत्यादिव्यवहाराणां व्यक्तावेव सम्भवात् । समासः सम्यगासनं, सम्बन्धोऽनुबन्ध इत्यर्थे गौरास्ते गोर्मुखमित्युदाहरणीयम् ॥ ५८ ॥

तद् दूषयति—

**न तदनवस्थानात् ॥ ५९ † ॥**

न व्यक्तौ शक्तिः व्यक्तिमात्रस्यानवस्थानात्=अव्यवस्थानात् ॥५९॥

व्यक्तिमात्रस्य शक्यत्वे हि गवादिपदाद्यत्किञ्चिद्व्यक्तेरुपस्थितिः स्यादित्यतो गोत्वविशिष्टा व्यक्तिर्वाच्या । तथा च "नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामति" इति न्यायात् जातावेव शक्तिरस्तु कथं तर्हि व्यक्तिबोध इत्यतोऽग्रिमसूत्रम्—

**सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगंगाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ॥ ६० ॥**

व्यक्तौ अतद्भावेऽपि=तत्पदाशक्यत्वेऽपि, तदुपचारः=तच्छब्दव्यपदेशः । यथा सहचरणादितो ब्राह्मणादौ यष्ट्यादिपदप्रयोगः । सहचरणात्=संयोगविशेषात् 'यष्टिं ‡ भोजय' इत्यत्र यष्टिशब्दप्रयोगः. एवं स्थानात्="मञ्चाः क्रोशन्ति" इति मञ्चस्थपुरुषे, तादर्थ्यात्

---

* स्वरूपप्रजननसन्तानो गौर्गां जनयतीति तद् उत्पत्तिधर्मत्वात् द्र०ये युक्तं जातौ विपर्ययात् ।" ( भा० ) आकृतेरप्यभिधायकं न भवति निष्क्रियत्वादाकृतेः । नहि निष्क्रिया तिष्ठति गच्छति वेति । यस्य चानेन विशेषणेन तिष्ठत्यादिना योगस्तं गोशब्दोऽभिधातुमर्हति । कुतः ? विशेषणविशेष्य भावस्यैकविषयत्वात् ॥ ( न्या० वा० )

† नानेन गोशब्देन व्यक्तिमात्रं शुद्धमुच्यते । यद्ययंव्यक्तिमात्राभिधायकोऽभविष्यत्तेन यस्यां कस्यांचिद्व्यक्तौ प्रत्ययो अभविष्यादेति सूत्रार्थः । ( न्या० वा० )

‡ साहचर्यात् संयुक्तसमवेतां जातिं ब्राह्मणेऽध्यारोप्य ब्राह्मणं यष्टिकेत्याह । एवं शेषाण्युपचारबीजानिस्वयमुत्प्रेक्षितव्यानि । ( न्या० वा० )

'कटं करोति' इति कटार्थकवीरणे, कटस्यासिद्धत्वेन कारकत्वायोगात्, यमस्य वृत्ताद्=अनुशासनादितो-राजनि यम इति, मानात्—आढकेन मिताः सक्तव आढकसक्तव इति, धारणात्-तुलया धृतं चन्दनम् तुलाचन्दनमिति, सामीप्याद्-गङ्गायां गावश्चरन्तीति, कृष्णद्रव्ययोगात्-कृष्णः शाटक इति, शकटेति पाठे कृष्णः शकट इत्युदाहरणीयम्, प्राणसाधनादन्नं प्राणा इति, आधिपत्याद्-राजैवास्य कुलमिति कुलाधिपतिः प्रतीयते। तथा च यथा गङ्गादिपदात् गङ्गातीरत्वादिनां बोधस्तथा गोपदादितो गोत्वविशिष्टस्य व्यक्तेः लक्षणया बोधः। एतेन युगपद्वृत्तिद्वयविरोधः, एकपदार्थयोः परस्परानन्वयश्च प्रत्युक्तः। गोत्वत्वेन रूपेण शक्तिग्रहात् तथैवोपस्थितिरतो निष्प्रकारकपदार्थोपस्थितिरपि नास्तीति मन्तव्यम् ॥६०॥

आकृतिरेव शक्येति मतमुपन्यस्यति—

**आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः ॥ ६१ ॥**

आकृतिः पदार्थः। कुतः? सत्त्वस्य=प्राणिनो=गवादेर्व्यवस्थानसिद्धेः=व्यवस्थितत्वसिद्धेस्तदपेक्षत्वाद्। अयमश्वो गौरयमित्यादिव्यवहारस्याकृत्यपेक्षत्वादाकृतिरेव शक्येत्यर्थः ॥ ६१ ॥

फलतस्तद्दूषयति—

**व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः ॥ ६२ ॥**

मृद्गवके व्यक्त्याकृतियुक्तेऽपि प्रोक्षणादीनामप्रसङ्गाद् अप्रसंजनाज्जातिः पदार्थः; इतरथा मृद्गवकस्यापि व्यक्तित्वाद्वाकृतिसत्त्वाच्च वैधं प्रोक्षणादिकं स्यादिति भावः ॥ ६२ ॥

केवलव्यक्त्याकृतिशक्तिपक्षं निराकृत्य केवलजातिशक्तिपक्षं निराकरोति—

**नाकृति*व्यक्त्यपेक्षत्वाज्जात्याभिव्यक्तेः ॥ ६३ ॥**

न जातिमात्रं पदार्थः जात्यभिव्यक्तेः=जातिशाब्दबोधस्य आकृति-

* व्यक्त्याकृती इति प्राप्ते प्राधान्यादाकृतेः पूर्वनिपातः। किं प्राधान्यम्? आकृतिविशेषणत्वं व्यक्तेः, यस्माद्व्यक्त्या विशिष्यमाणाऽऽकृतिर्जातेः लिङ्गं भवति तस्मात्प्रधानमाकृतिः। (न्या० वा०)

व्यक्त्यपेक्षत्वाद्=आकृतिव्यक्तिविषयकत्वनियमात्। तयोरपि वाच्यत्वमावश्यकम्, शक्तिं विना तद्भानासम्भवात्। न च गोत्वप्रकारकतादृशाकृतिविशिष्टशाब्दत्वस्य कार्यतावच्छेदकत्वात् तद्भानमिति वाच्यम्, तथा सति गवादिपदस्य घटत्वादावपि शक्तिप्रसङ्गः; तस्मात् पदं स्ववाच्यमेवोपस्थापयति ॥ ६३ ॥

इत्थम् च त्रयाणामपि वाच्यत्वं सिद्धमित्याह –

**व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६४ ॥**

तुशब्द एकैकमात्रपदार्थत्वव्यवच्छेदाय। पदार्थ इत्येकवचनं तु तिसृष्वप्येकैव शक्तिरिति सूचनाय। विभिन्नशक्तौ कदाचित् कस्याश्चदुपस्थितिः स्यात्। शक्तेस्तुल्यत्वेऽपि व्यक्तेर्विशेष्यत्वात् प्राधान्यम् तथैव शक्तिग्रहात्। न चाकृत्यादिसाधारणशक्यतावच्छेदकाभावान्न शक्त्यैक्यमिति वाच्यम्, तथा नियमे मानाभावात्। इदं गवादिपदमभिप्रेत्य, तेन पश्वादिपदस्य जात्यवाचकत्वेऽपि न क्षतिः। जातिपदं वा धर्मपरं, तथैव लक्षणस्य वक्ष्यमाणत्वात् ॥ ६४ ॥

तत्र के व्यक्त्यादय इत्याकाङ्क्षायामाह—

**व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ॥ ६५ ॥**

यद्यपि जात्यादेरपि व्यक्तित्वात् प्रमेयत्वमेव व्यक्तित्वं, तथापि जात्याकृतिशक्तिविषयव्यक्तेरिदं लक्षणम्। तथा च गुणविशेषो जात्याकृतिसमानाधिकरणो गुणः संख्यादिभिन्नस्तदाश्रयो मूर्तिर्व्यक्तिरिति समानार्थकमित्यर्थः। परे तु—गुणा=रूपादय, विशेषाः=विशेषकाः=उत्क्षेपणादयः, तेषामाश्रयो द्रव्यं; तेन जात्याश्रयो व्यक्तिरित्याशयः, विशेषलक्षणमाह-मूर्त्तिरिति। मूर्त्तिः संस्थानविशेषः तद्वान् इत्याहुः॥ अत्र च मध्यमपदलोपी समास इत्याशयः। अन्ये तु–व्यक्तेर्लक्षणं मूर्तिरिति, सैव केत्याह—गुणविशेषाश्रय इति। गुणविशेषस्यावच्छिन्नपरिमाणस्याश्रय इत्यर्थः इत्याहुः ॥ ६५ ॥

आकृतिं लक्षयति

**आकृतिर्जातिलिङ्गाख्या ॥ ६६ ॥**

जातिलिङ्गमित्याख्या यस्याः, जातेर्गोत्वादेर्हि सास्नादि संस्थानविशेषो लिङ्गं, तस्य च परंपरया द्रव्यवृत्तित्वं। जातिर्द्रव्यसमवायिकारणतावच्छेदिका लिङ्गं धर्मो यस्याः सेत्यर्थः इति कश्चित् ॥ ६६ ॥

जातिं लक्षयति—

**समानप्रसवात्मिका जातिः ॥ ६७ ॥**

समानः=समानाकारकः, प्रसवो=बुद्धिजननम्, आत्मा=स्वरूपं, यस्याः सा । तथा च समानाकारबुद्धिजननयोग्यत्वमर्थः । समानाकारबुद्धिजननयोग्यधर्मविशेषो नित्यानेकसमवेतरूपोऽर्थ इत्यर्थ इत्यपि वदन्ति । इदं तु बोध्यम्—एवं सत्याकृत्यविषयको गवादिपदान्न शाब्दबोधः, अनुभवबलेन तथैव कार्यकारणभावकल्पनाद्, अन्यथा लाघवाद्गोपदस्यगोत्वविशिष्टे शक्तिरेव स्यादिति ॥ ६७ ॥

समाप्तं शब्दशक्तिपरीक्षाप्रकरणम् ॥४॥

विभागपरीक्षाद्वारकं साङ्गप्रमाणपरीक्षणं नाम
द्वितीयाध्यायस्य द्वितीयमाह्निकं च ।

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ द्वितीयाध्यायवृत्तिः समाप्ता ।

नरप्रभृतितुल्यता भवति यत्कृपामन्तरा
यदीयकरुणाकणात् तरति मोहजालं नरः * ।
विधाय हृदयाम्बुजे रुचिरवाक्प्रचाराय तां
नमामि परदेवतां सततमेव वाणीमहम् ॥

अथावसरतः प्रमेयेषु परीक्षणीयेषु प्रथमोद्दिष्टमात्मादिप्रमेयषट्कं तृतीये परीक्षणीयं, तेनात्मादिषट्कपरीक्षैवाध्यायार्थः । तत्रात्मादिचतुष्कपरीक्षा प्रथमाह्निकार्थः, तत्र च नव प्रकरणानि, तत्रादाविन्द्रियभेदप्रकरणं, तत्रेन्द्रियं ज्ञानवन्नवेति संशये करणत्वेन सिद्धानामिन्द्रियाणां चैतन्यमस्तु लाघवात्, तथा चात्मशब्दस्य नानार्थत्वादिन्द्रियाणामभौतिकत्वाद्वा न साङ्कर्यमितीन्द्रियचैतन्यवादिनः, तन्निराकरणाय सूत्रम्—

**† दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥**

एकस्यैव दर्शनस्पर्शनाभ्यामर्थस्य ग्रहणात् । दर्शनस्पर्शने ज्ञानविशेषौ । तृतीया च प्रकारे, तेन चाक्षुषस्पार्शनोभयवत्त्वेनैकस्य

---

* अन इति पाठान्तरम् ।

† भावस्य भवित्रपेक्षत्वाच्चेति सूत्रार्थः ( न्या० वा० )

धर्मिणः प्रतिसन्धानादित्यर्थः। तथा च योऽहं घटमद्राक्षं, सोऽहं स्पृशामीत्यनुभवादात्मेन्द्रियव्यतिरिक्त एक इति ॥ १ ॥

अत्र शङ्कते—

**न विषयव्यवस्थानात् ॥ २ ॥**

चक्षुस्त्वागादीनां रूपस्पर्शादिवन्नियतविषयत्वात् चक्षुरादेश्चाक्षुषादिसमवायित्वम्। इत्थं चाभेदप्रत्ययो भ्रान्त इति भावः ॥२॥

समाधत्ते-

**तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥**

उक्तप्रतिषेधो न युक्तः उक्तविषयव्यवस्थानादेवात्मसद्भावादतिरिक्तात्मकल्पनादित्यर्थः। अयं भावः—तत्तदिन्द्रियाणां तत्तद्विषयप्रत्यक्षं प्रति समवायित्वं वाच्यम्, न तु प्रत्यक्षत्वावच्छिन्नं प्रति। अनुमित्यादिजनकत्वे तु विनिगमकाभावः। तेन जन्यज्ञानत्वावच्छिन्नजनकतावच्छेदकमात्मत्वं, चक्षुरादेरनित्यत्वादात्मनश्च नित्यताया वक्ष्यमाणत्वात् चक्षुरादिविनाशेऽपि स्मरणात् चक्षुरहमित्याद्यप्रतीतेश्च नेन्द्रियात्मवादो युज्यत इति ॥ ३ ॥

समाप्तमिन्द्रियभेदप्रकरणम् ॥ १ ॥

---

ननु गौरोऽहं जानामीत्यादिप्रतीतेस्तु शरीरमात्मेत्याशङ्क्य

*** शरीरदाहे पातकाभावात् ॥ ४ ॥**

पातकाभावात्=पातकादेरभावप्रसङ्गात्। तथा चौत्तरकालिकं दुःखादिकं न स्यादिति। यद्वा दाहो=नाशः, तथा च शरीरनाशे कृते कर्तरि शरीरे विनष्टे पातकं न स्यादित्यर्थः। यद्यपि भूतचैतन्यवादिनां पातकादिकं नोपपद्यते, तथापि तस्य प्रसाध्याङ्कत्वादेकदेशिनः † पूर्वपक्षित्वाद्वा न दोष इति भावः ॥ ४ ॥

तवापि तुल्यो दोष इत्याशङ्कते—

**तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥**

---

* तदिदं सूत्रं यस्यात्मा नास्ति तस्यायं दोष इति प्रतिपादनार्थं न साधनार्थमिति। ( न्या० वा० )

† एकदेशिनः=बौद्धस्य, स तु पातकमभ्युपगच्छतीति।

तदभावः=पातकाभावः, सात्मकशरीरस्य प्रदाहेऽपि प्रसक्तः तन्नित्यत्वात्=तस्य=आत्मनो नित्यत्वात्, नित्यत्वेन निर्विकारत्वम्। तेन जन्यधर्मानाश्रयत्वमभिमतम् इति केचित्। तन्नित्यत्वात् शरीरनाशे शरीरविशिष्टात्मनाशस्य नियतत्वादित्यपि कश्चित्। किञ्च सात्मकशरीरनाशेऽपि हन्तुः पातकाभावः तस्यात्मनो नित्यत्वे तन्नाशकत्वाभावात्॥ ५॥

परिहरति—

**न कार्य्याश्रयकर्तृवधात्॥ ६॥**

*कार्य्याश्रयस्य=चेष्टाश्रयस्य, कर्त्तुः=कृत्यवच्छेदकस्य शरीरस्यैव नाशो, न त्वात्मन इति न पातकाभावः। यद्वा न हन्तुः पातकाभावः कार्य्याश्रयकर्त्तुर्वधात् शरीरस्य नाशात् ब्राह्मणत्वादेः शरीरवृत्तित्वात्, तन्नाशादेव पापोत्पत्तिरिति भावः। वस्तुतस्तु अपूर्वशरीरावच्छिन्नप्राणसंयोगात्मकोत्पत्तिवत् शरीरावच्छिन्नप्राणसंयोगध्वंसविशेषात्मकमरणमप्यात्मनः संभवति। अन्यथा शरीराविनाशिनो बन्धनमुखनिरोधादेर्हिंसात्वं न स्यात्। पातकानभ्युपगन्तृचार्वाकादिमते शरीरभेदसाधनं तु वक्ष्यमाणयुक्तिभिरिति ध्येयम्॥ ६॥

समाप्तं देहभेदप्रकरणम्॥ २॥

†प्रसङ्गाच्चक्षुरद्वैतप्रकरणमारभते—

**सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्॥ ७॥**

वामेन चक्षुषा दृष्टस्य दक्षिणेन चक्षुषा प्रत्यभिज्ञानात् स्थिरात्मसिद्धिरिति केषांचिन्मतं, तन्निराकरणायैवैतदुपन्यासः॥ ७॥

एतद् दूषयति—

**नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात्॥ ८॥**

---

* कार्य्याणि=इन्द्रियाणि, तेषामाश्रयः तस्य इति।

† भाष्यकारस्तु चक्षुर्द्वैतमेव मन्यते तद्यथा अत्रैव भाष्ये "सव्यचक्षुषा दृष्टमथेतरेणापि चक्षुषा प्रत्यभिज्ञानात्, यमद्राक्षं तमेवैतर्हि पश्यामीति। इन्द्रियचैतन्ये तु—नान्यदृष्टमन्यः प्रत्यभिजानाति—इति प्रत्यभिज्ञानुपपत्तिः। अस्ति त्विदं प्रत्यभिज्ञानं, तस्मादिन्द्रियव्यतिरिक्तश्चेतनः" इति। तन्मतानुसारेण सव्येति सिद्धान्तसूत्रं, नैकस्मिन्निति आक्षेपसूत्रं, एकविनाशेति द्वित्वसाधकं,

मध्यस्थसेतुना तडागस्येव नासास्थिव्यवहितगोलकान्तरावच्छिन्नतया द्वैतप्रत्ययो भ्रम इत्यर्थः ॥ ८ ॥

आक्षिपति—

**एकविनाशे द्वितीयाविनाशात् नैकत्वम् ॥ ९ ॥**

चक्षुरैक्ये एकचक्षुर्नाशेऽन्धत्वं स्यादिति भावः ॥ ९ ॥

अत्रैकदेशी परिहरति—

**अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः ॥ १० ॥**

अवयवस्य शाखादेर्नाशेऽप्यवयविनो वृक्षस्य प्रत्यभिज्ञानात् नावयवनाशे सर्वत्रावयविनाशनियमः तथैवैकनाशेऽपि नान्धत्वमिति ॥ १० ॥

एकदेशिमतस्य पूर्वोक्ताक्षेपस्य च समाधानाय सिद्धान्तिनः सूत्रम्—

**दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥**

उक्तः प्रतिषेधो न युक्तः दृष्टान्तस्य विरोधाद्=अयुक्तत्वात् ।

---

अवयवनाशेऽपीति आक्षेपस्तत्र, दृष्टान्तविरोधादिति तत्परिहारः इति ज्ञेयं । वार्तिककारस्तु चक्षुरद्वैतमेव मेने यथा—"सिद्धत्वादनारम्भ इति=दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येतस्मिन् प्रकरणे सिद्ध आत्मव्यतिरेकः, सिद्धत्वादनारभ्यं प्रकरणमिति । इन्द्रियव्यतिरेकज्ञापनार्थम् इत्येके=एक इदं प्रकरणं इन्द्रियव्यतिरेकज्ञापनार्थं वर्णयन्ति, तन्न, ततएव सिद्धेः—पूर्वप्रकरणेनैव इन्द्रियशरीरव्यतिरेकः सिद्धः इति । समुच्चयार्थम् इत्यपरे—अपरे तु समुच्चयार्थं सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादिति हेतुं ब्रुवते । युक्तोऽन्यः समुच्चयः, अयं तु न युक्तो विरोधात्; सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादिति ब्रुवाणो युक्तिं बाधते । का पुनरियं युक्तिबाधा ? अनेकत्वादिन्द्रियस्य युगपदधिष्ठानासंभवः । अणु मनोऽनेकं चक्षुः, न च अणोर्मनसो युगपदनेकेन चक्षुषा सम्बन्धः सम्भवति । अथासम्बद्धमपि द्वितीयं चक्षुरर्थानालोचयति । एवं च द्वितीयचक्षुर्वदितरचक्षुरपि मनसाऽनधिष्ठितमेव प्रवर्त्तिष्यते इति व्यर्थं मनः प्राप्तं, अनधिष्ठितं च प्रवर्त्तमानमिन्द्रियं करणत्वं बाधते । नच करणमनधिष्ठितं प्रवर्त्तमानं दृष्टमिति । समग्रासमग्रयोश्च तुल्योपलब्धिप्रसंगः। न ह्यनधिष्ठितमिन्द्रियं प्रवर्त्तते ह्यणुत्वान्मनसा नित्यमेकमेव संबद्ध्यते इति विकलाविकलयोस्तुल्योपलब्धिः प्राप्नोति । प्रकरणविरोधश्च=इन्द्रियपंचकत्वादितीन्द्रियपंचत्वप्रतिपादकं प्रकरणं विरुध्यते इति" इति ॥ वृत्तिकारस्तु वार्त्तिककृद्व्याख्यानमेव ज्यायो मेने ।

नहि शाखाच्छेदे वृक्षस्तिष्ठति; तथा सति वृक्षस्यानाशप्रसङ्गाद्। अतो ऽवस्थितावयवैस्तत्र खण्डवृक्षोत्पत्तेर्नैकदेशिमतं युक्तम्। एतेनैकनाशे द्वितीयाविनाशाद् भेदसाधनमपि प्रत्युक्तं चक्षुर्नाशेऽपि गोलकान्तरावच्छिन्नावयवैः खण्डचक्षुःसंभवात्। इत्थं च लाघवाच्चक्षुरद्वैतमिति टीकास्वरससिद्धम्। परे तु चक्षुद्वैतमेव सूत्रार्थं मन्यमाना व्याचक्षते सिद्धान्तिनः सूत्रं–सव्येति। शङ्कते–नैकस्मिन्निति। समाधत्ते–एकेति। शङ्कते–अवयवेति। निराकरोति–दृष्टान्तेति। शाखानाशे वृक्षनाशावश्यकत्वात् दृष्टान्तो न युक्तः यद्वा दृष्टान्तस्य गोलकभेदस्य विरोधाद्=अन्यथा उपपन्नत्वात्। दृष्टं हि मृतस्य चक्षुरधिष्ठानगोलकद्वयं भेदेनैवोपलभ्यत इति वदन्ति॥ ११॥

आत्मन इन्द्रियभेदे युक्त्यन्तरमाह—

इन्द्रियान्तरविकारात्॥ १२॥

चिरबिल्वाद्यम्लद्रव्ये दृष्टे तद्रसस्मरणात् दन्तोदकसम्भवरूपरसनेन्द्रियविकारादिन्द्रियव्यतिरिक्त आत्मा सिध्यति॥ १२॥

आक्षिपति—

न स्मृतेः स्मर्त्तव्यविषयत्वात्॥ १३॥

स्मृतिर्हि स्मर्त्तव्यविषयिणीति नियमः। तस्याश्च दर्शनादिना सामानाधिकरण्ये मानाभावात्, अस्तु वा विषयतयैव सामानाधिकरण्यमिति भावः॥ १३॥

समाधत्ते—

तदात्मगुणसद्भावादप्रतिषेधः॥ १४॥

उक्तः प्रतिषेधो न युक्तः धर्मिग्राहकमानेन स्मृतेरात्मगुणत्वात्, परिशेषेणात्मगुणत्वसिद्धेरहं स्मरामीत्यनुभवात् विषयनिष्ठकार्य्यकारणभावे चैत्रस्यज्ञानान्मैत्रस्य स्मरणापत्तेरिति भावः॥ १४॥

विषयाणां स्मर्त्तव्यानां स्मृतिसमवायित्वं स्यादित्याशङ्क्य समाधत्ते—

अपरिसंख्यानाच्च स्मृतिविषयस्य॥ १५॥

अपरिसंख्यानात्=आनन्त्यात्। तथा च लाघवादतिरिक्तात्मसिद्धिः। इदं न सूत्रं किन्तु भाष्यमिति केचित्॥ १५॥

समाप्तं चक्षुरद्वैतप्रकरणम्॥ २॥

ननु मनसो नित्यत्वादात्मत्वमस्त्वित्याशङ्कते—

**नात्मप्रतिपत्तिहेतूनां मनसि संभवात् ॥ १६ ॥**

नातिरिक्त आत्मा आत्मसाधकमानानां मनसार्थान्तरत्वमिति भावः॥१६॥

समाधत्ते—

**ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम ॥ १७ ॥**

यदि मनसो ज्ञातृत्वं, तदा व्यासङ्गाद्युपपादनाय करणान्तरमवश्यं वाच्यम्। तथाचैको ज्ञाता, ज्ञानसाधनं चैकं सिद्धं, मन आत्माऽस्त्विति संज्ञाभेदमात्रं, किंच व्यासङ्गोपपादकतया मनसोऽणुत्वं सिद्धमात्मनश्च प्रत्यक्षोपपादकतया महत्त्वमिति भेद आवश्यक इति भावः ॥१७॥

ननु रूपादिप्रत्यक्षं सकरणकमस्तु, न तु सुखादिप्रत्यक्षम्। एवं परमाण्वन्तरस्यातीन्द्रियत्वेऽपि मनसः प्रत्यक्षं स्यादत्राह—

**नियमश्च निरनुमानः ॥ १८ ॥**

उक्तो नियमविशेषो निरनुमानः=निष्प्रमाणको गौरवाद्वैपरीत्ये च विनिगमकाभावाच्चेति भावः ॥ १८ ॥

समाप्तं मनोभेदप्रकरणम्।

---

एवं साधितेऽपि देहादिभिन्ने आत्मनि, विना तन्नित्यतां न परलोकार्थिनः प्रवृत्तिरत आत्मनित्यताप्रतिपादनाय सूत्रम्—

**पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभय-शोकसंप्रतिपत्तेः * ॥ १९ ॥**

जातस्य बालस्य एतज्जन्माननुभूतेष्वपि हर्षादिहेतुषु सत्सु हर्षादीनां संप्रतिपत्तिः=उत्पत्तिः, तस्याः पूर्वपूर्वानुभवाधीनस्मृतिसम्बन्धादेव संभवात्। इत्थं चेदानीन्तनस्यात्मनः पूर्वपूर्वसिद्धौ तस्यानादित्वमनादेश्च न नाश इति नित्यत्वसिद्धिरिति भावः ॥ १९ ॥

---

* "जन्म निकायविशिष्टाभिः शरीरेन्द्रियबुद्धिवेदनादिभिः संबन्धः; अभिप्रेतविषयप्रार्थनाप्राप्तौ सुखानुभवो हर्षः; अनिष्टविषयसाधनोपनिपाते तज्जिहासोर्हानाशक्यता भयम्। इष्टविषयवियोगे सति तत्प्राप्त्यशक्यप्रार्थना शोकः; तदनुभवः संप्रतिपत्तिः, एकविषयानेकविज्ञानोत्पादोऽभ्यासः, एकाकारविषयो वा; यथा शालयोऽनेनाऽभ्यस्ता इति। प्रत्यक्षबुद्धिनिरोधे तदनुसन्धानविषयः प्रत्ययः स्मृतिः।......अनुबन्धः भावनाख्यः स्मृतिहेतुः संस्कारः। (न्या०वा०)

अत्र शङ्कते—

* पद्मादिषु † प्रबोधसंमीलनविकारवत् तद्विकारः ॥ २० ॥

बालस्य हर्षादयो मुखविकासाद्यनुमेयाः न च तत्संभवः पद्मादीनां प्रबोधादिवददृष्टविशेषाधीनक्रियावशादेव तदुपपत्तेरिति भावः ॥२०॥

सिद्धान्तसूत्रम्

नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥ २१ ॥

उक्तं न युक्तं, यतः ‡ पञ्चात्मकानां=पाञ्चभौतिकानां पद्मादीनां ये विकारास्तेषाम् उष्णकालादिनिमित्तत्वात्। मनुष्यादीनां तु हर्षादिनिमित्तका मुखविकासादय इति न तुल्यतेति भावः ॥ २१ ॥

आत्मनित्यत्वे हेत्वन्तरमाह—

¶ प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २२ ॥

प्रेत्य=मृत्वा, जातमात्रस्य यः स्तन्याभिलाषः, स तावदाहाराभ्यासजनितः। जन्मान्तरीयाहारेष्टसाधनताधीजन्यजीवनादृष्टोद्बोधितसंस्काराधीनेष्टसाधनतास्मरणेन हि बालः स्तन्यपाने प्रवर्तत इत्यनादित्वमिति ॥ २२ ॥

§ अयसोऽयस्कान्ताभिगमनवत् तदुपसर्पणम् ॥२३॥

यथाऽयस्कान्तसन्निहितस्यायसोऽयस्कान्ताभिमुखतया गमनं, तथैव वत्सस्यापि स्तनोपसर्पणं, नत्विष्टसाधनत्वज्ञानाधीनप्रवृत्तिजन्यचेष्टेयमित्यर्थः ॥ २३ ॥

---

* अनित्ये पद्मादावपि विकारदर्शनात् पूर्वोक्तो नित्यत्वसाधको हेतुरनेकान्त इति सूत्रार्थः।

† पद्मपत्रावयवविभागो विनश्यत्कार्यः प्रबोधः। पद्मपत्रावयवानामारब्धकार्याणां याः पुनः परस्परेण प्राप्तयः तत्सम्मीलनमिति ( न्या० वा० )

‡ पद्मादीनि न पंचात्मकानि=पंचात्मककारणानि, अपि तु पंचानां भूतानामनुग्रहे सति पद्मादीनि भवन्तीति पंचात्मकत्वमुक्तं तेषाम्। वस्तुतस्तु न किंचित्पञ्चात्मकमस्ति। ( न्या० वा० )

¶ किमर्थं पुनरिदं सूत्रमारभ्यते यदाऽयमर्थः पूर्वाभ्यस्तसूत्रेऽवगतः? सामान्यतोऽधिगतस्य विशेषज्ञापनार्थं सूत्रमित्यदोषः। ( न्या० वा० )

§ प्रवृत्तिमात्रस्यानैकान्तिकत्वज्ञापनार्थं अयसोऽयस्कान्तेति सूत्रम्। (न्या०वा०)

समाधत्ते—

* नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥

स्तनपाने एव बालः प्रवर्तते, न त्वन्यत्रेति नियमः कथं स्यात्? वस्तुतस्तु अन्यत्र अयसि प्रवृत्त्यभावात्; प्रवृत्तिर्हि चेष्टानुमिता लिङ्गं, न तु क्रियामात्रम् अतो न व्यभिचार इति भावः ॥ २४ ॥

हेत्वन्तरमाह—

वीतरागजन्मादर्शनात् ॥ २५ ॥

वीतरागो रागशून्यः तावत् नोत्पद्यते, अपितु सरागः, तत्र च जन्मान्तरीयेष्टसाधनताज्ञानाधीनस्मरणं हेतुरिति पूर्वं स्तन्याभिलाष उक्तः† । सम्प्रति तु पतगादीनां कणादिभक्षणाभिलाषसाधारणं रागमात्रमित्यपौनरुक्त्यम् ॥ २५ ॥

---

* आकस्मिकत्वप्रतिषेधार्थं सूत्रम् ।

† अत्र भाष्यम्—"अयं जायमानो रागानुबद्धो जायते, रागस्य पूर्वानुभूतविषयानुचिन्तनं योनिः । पूर्वानुभवश्च विषयाणामन्यस्मिन् जन्मनि शरीरमन्तरेण नोपपद्यते । सोऽयमात्मा पूर्वशरीरानुभूतान् विषयान् अनुस्मरन् तेषु तेषु रज्यते, तथा चायं द्वयोर्जन्मनोः प्रतिसन्धिः, एवं पूर्वशरीरस्य पूर्वतरेण, पूर्वतरस्य पूर्वतमेन इत्यादिनाऽनादिश्चेतनस्य शरीरयोगः, अनादिश्च रागानुबन्ध इति सिद्धं नित्यत्वमिति"। अत्र वार्तिककारस्य विकल्पान्तरम्—"अदृष्टादिति चेत् अथ मन्यसे, न पूर्वशरीरयोगो रागाद्गम्यते, अपितु अदृष्टादिति चेत् ? न, अभिप्रायापरिज्ञानात्=नैवमभिप्रायः, कारणनियमेन रागः, अपितु पूर्वशरीरसम्बन्धप्रतिपादनं सूत्रार्थः। न च 'अदृष्टाद्रागः' इति तत् ( पूर्वशरीरसम्बन्धः ) प्रतिषिध्यते ।" इति । कथं न पूर्वानुभूतं सर्वं स्मरतीति अस्योत्तरमित्थं व्याजहार दार्शनिकचक्रचूडामणिः श्रीमान् वाचस्पतिमिश्रः—" यौवनाद्यवस्थायां हि चेतनस्य प्रवृत्तिः क्षीरादौ पूर्वाभ्यस्तस्मृत्यनुबन्धहेतुका प्रतीतेति बाल्यावस्थायामपि चेतनस्य तद्धेतुकैव भवितुमर्हति, तेन हेतुना चेतनप्रवृत्तेः स्वाभाविकसम्बन्धावगमात् वह्निनेव धूमस्य । एवं व्यवस्थिते यत्र स्मृतेः कार्यं दृश्यते तन्मात्रविषयैव बालस्य स्मृतिरनुमीयते नान्यत्र । न च य एकस्य स्मरति तेनापरमपि स्मर्तव्यमिति नियमहेतुरस्ति, येन जात्यन्धबधिरादयो रूपादीन् आचक्षीरन् । अदृष्टपरिपाकोद्बोधितस्य संस्कारस्य तन्नियमेन नियमोपपत्तेः, अद्यत्वेऽपि चानुभूतेषु कस्यचिदेव स्मरति न सर्वस्येति ॥" ( ता० टी० )

शङ्कते—

**सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः ॥ २६ ॥**

द्रव्यस्य = घटादेर्यथा सगुणस्य रूपादिविशिष्टस्योत्पत्तिः। यथा घटादिः स्वत एव रूपादिमान् भवति, तथैवात्माऽपि स्वत एव सरागो भवतीत्यप्रयोजकत्वं त्वदीयहेतूनामिति भावः ॥ २६ ॥

समाधत्ते—

**न संकल्पनिमित्तत्वाद् रागादिनाम् ॥ २७ ॥**

संकल्पो=ज्ञानं, इष्टसाधनताज्ञानं इति यावत्, तन्निमित्तका हि रागादयः। तथा च इष्टसाधनताज्ञानत्वेनेच्छात्वादिना कार्य्यकारणभावात् प्रवृत्तित्वेन चेष्टात्वेन च कार्य्यकारणभावान्नाप्रयोजकत्वमिति भावः ॥ २७ ॥

समाप्तमनादिनिधनप्रकरणम् ॥ ५ ॥

क्रमप्राप्ते शरीरपरीक्षणे मानुषादिशरीरं पाञ्चभौतिकमित्येके, तत्र सिद्धान्तसूत्रम् —

**पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥**

मानुषादिशरीरं पार्थिवं = पृथिवीसमवायिकारणकं, गुणान्तरस्य = गन्धनीलादिरूपकाठिन्यादेरुपलब्धेरिति ॥ २८ ॥

मतान्तराभिधानाय त्रिसूत्री—

***पार्थिवाप्यतैजसं तद्गुणोपलब्धेः ॥ २९ ॥**

***निश्वासोच्छासोपलब्धेश्चातुर्भौतिकम् ॥ ३० ॥**

*** गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ॥ ३१ ॥**

तद्गुणानां=पृथिव्यप्तेजोगुणानां गन्धस्नेहोष्णस्पर्शानामुपलब्धेः। एतावता त्रैभौतिकत्वे सिद्धे निःश्वादितश्चातुर्भौतिकत्वं, निःश्वासोच्छ्वासौ प्राणवायोर्व्यापारविशेषौ। क्लेदो जलविशेशो, जलविशिष्टपृथिवी वेति उभयथाऽपि जलमावश्यकम्। भुक्तान्नादेर्जठरानलैः पाकस्य तेजःसंयोगाधीनत्वात् तेजःसिद्धिः, व्यूहो=निश्वासादिः; अवकाशदानं=छिद्रम्। एतानि मतानि सूत्रकृता तुच्छत्वान्न दूषितानि। तथाहि एकस्मिन् शरीरे पृथिवीत्वादिनानाजातेः संकरापत्ते-

* इमानि न सूत्राणि, अपितु भाष्यमिति केचित्तैर्थिकाः।

रसंभवात्; न वा नानोपादानकत्वं * विजातीयानामनारम्भकत्वात्; तथात्वे वा जलाद्यारब्धस्य न पृथिवीत्वं व्यभिचारात्; न वा चित्र-द्रव्यम् गन्धवत्त्वविरोधात्; गन्धादीनामानाशमनपायाच्च पार्थिव-त्वमित्युक्तप्रायं; यद्वा पार्थिवत्वे कथं जलादिसंबन्ध इत्याशङ्कायां जलादिनिमित्तवशात्त्रैभौतिकत्वादिव्यपदेश इत्याशयेन त्रिसूत्री ॥ २९-३०-३१ ॥

पार्थिवत्वे युक्त्यन्तरमाह –

**श्रुतिप्रामाण्याच्च ॥ ३२ ॥**

"सूर्यं ते चक्षुः स्पृणोमि" इति मंत्रान्ते "पृथिवीं ते शरीरम्" इत्यभिधानादेवं † प्रकृतौ विकारस्य ‡ लयाभिधाने "सूर्य्यं ते चक्षुर्गच्छतात्" इति मंत्रान्ते 'पृथिव्यां ते शरीरम्' इति ॥ इमां चतुःसूत्रीं केचन भाष्यतया वर्णयन्ति, तन्न, तथा सत्येकसूत्रस्य

---

* इदं बोध्यं—"पृथिव्याप्यपरमाणू तावन्नैकं द्व्यणुकमारब्धुमर्हतः। तयोः रूपस्पर्शवत्त्वेन तदारम्भसंभवेऽपि गन्धवत्त्वाभावप्रसंगात्। एकपार्थिवाणुसमवेतस्य गन्धस्यैकत्वेनानारम्भकत्वात्। नापि पार्थिवपरमाणुद्वयमेकश्च पाथसीयः परमाणुरित्यणूनामारम्भ-कत्वे गन्धवत्त्वोपपत्तिरिति वाच्यम्, परमाणूनां बहूनामनारम्भक-त्वात्। तथाहि—त्रयः परमाणवो न कार्यद्रव्यमारभन्ते परमाणुत्वे सति बहुत्वसंख्यायुक्तत्वात्, घटोपगृहीतपरमाणुप्रचयवत्। आर-म्भकत्वे तेषां घटोपगृहीतानां कपालशर्कराचूर्णक्रमो घटनाशे नोपलभ्येत। द्व्यणुके च विजातीयानारम्भकत्वं दृष्टं तेनैव दृष्टान्ते-नान्यत्रापि विजातीयारम्भो निषेध्यः। एतेन पार्थिवावयवानां बहूनां सतां पाथसीयैरवयवैः शरीरारम्भः प्रत्युक्तः, विजातीयानामनारम्भ-कत्वस्य दृष्टान्तधर्मिणि विनिश्चयादिति" ॥ (ता० टी०) विशेषस्तु न्यायवार्त्तिके तट्टीकायां च द्रष्टव्यः ॥

† यद्यपि सर्वत्र मुद्रितामुद्रितपुस्तकेषु यथास्माभिरत्र विन्यस्तः तादृश एव पाठ उपलभ्यते, तथापि 'अभिधानात्' इत्यस्य स्थाने "स्मृत्यभिधानात्" इत्येव युक्तः पाठः इति मे प्रतिभाति। स्मृतिश्च कारणात्कार्य्योत्पत्तिरिति ॥

‡ लयशब्देनात्र 'कार्यशून्यं कारणम्' इत्युच्यते इत्थं च 'असदुत्पद्यते, सन्निरुध्यते' इत्ययमर्थः सम्यगुक्तो भवति।

प्रकरणत्वानुपपत्तेः अत एव चतुर्थं सूत्रमेवेत्यपरे; अन्ये तूक्तयैवानुपपत्त्या "आप्यतैजसवायव्यानि लोकान्तरशरीराणि, तेष्वपि भूतसंयोगः पुरुषार्थतन्त्र" इति भाष्यं सूत्रतया वर्णयन्ति। तदर्थस्तु-आप्यादीनि लोकान्तरेषु=वरुणलोकादिषु प्रसिद्धानि शरीराणि; जलादिरूपत्वेन कथमुपभोगक्षमतेत्यत्र—तेष्वपीति, भूतसंयोगः= पृथिव्युपष्टम्भः; पुरुषार्थतन्त्रः = उपभोगसंपादकः ॥ ३२ ॥

समाप्तं शरीरपरीक्षाप्रकरणम् ॥ ६ ॥

अथेन्द्रियं परीक्षणीयं, तत्र लक्षणसूत्रोक्तं भौतिकत्वमिन्द्रियाणां परीक्षितुं संशयमाह—

**कृष्णसारे सत्युपलम्भात् व्यतिरिच्य चोपलम्भात् संशयः ॥ ३३ ॥**

कृष्णसारे = चक्षुर्गोलके सति घटाद्युपलम्भात् गोलकस्येन्द्रियत्वम् इति बौद्धा, व्यतिरिच्य = विषयं प्राप्य उपलम्भात्=उपलम्भजननाद्गोलकातिरिक्तानि इत्यपरे। तत्र इन्द्रियाणि गोलकातिरिक्तानि न वेति संशयः। गोलकातिरिक्तानीति नैयायिकादयः; तत्राप्यभौतिकान्याहंकारिकाणीति सांख्याः, भौतिकानीत्यपरे ॥ ३३ ॥

तत्र सांख्यमतेन बौद्धमतमुदस्यन्नाह—

**महदणुग्रहणात् ॥ ३४ ॥**

गोलकं नेन्द्रियम् अप्राप्यकारित्वेऽतिप्रसङ्गात्। इत्थं च गोलकातिरिक्तं भौतिकमिति वाच्यं, तदप्यसङ्गतं चक्षुषा हि न्यूनपरिमाणं महत् परिमाणं च गृह्यते; न च न्यूनेन महतो व्यापनं सम्भवति। न च अव्याप्यग्रहणम्; अतोऽभौतिकानीन्द्रियाण्याहङ्कारिकाणीति ॥ ३४ ॥

सांख्यं निरस्यति—

**रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम् ॥ ३५ ॥**

रश्मिः = गोलकावच्छिन्नं तेजः; तेनार्थस्य घटादेर्यः संनिकर्षविशेषस्तस्मात् तयोर्महदण्वोर्ग्रहणमुपपद्यते * भौतिकेऽपि प्रदीपादौ

* रश्म्यर्थसंनिकर्षश्चावरणलिङ्गः कुड्यादिव्यवहितानामप्रकाशरूपत्वात्। (न्या० वा)

महदणुप्रकाशकत्वं दृष्टम्। अभौतिकत्वे तु पुरःपश्चाद्वर्तिनां सर्वेषामेव ग्रहणं स्यात्॥ ३५॥

तैजसे चक्षुष्यनुपलब्धिबाधं बौद्धः शङ्कते—

**तदनुपलब्धेरहेतुः॥ ३६॥**

रश्म्यर्थसन्निकर्षो न हेतुर्गोलकातिरिक्तस्य रश्मेरनुपलब्धेः॥३६॥

समाधत्ते—

**नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः॥ ३७॥**

रूपोपलब्धेः सकरणकत्वादिनाऽनुमीयमानस्य चक्षुषः प्रत्यक्षतोऽनुपलब्धिर्नाभावनिर्णायिकेत्यर्थः॥ ३७॥

कथं तर्हि नोपलम्भ इत्यत आह—

**द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः॥ ३८॥**

द्रव्यस्य धर्मभेदो महत्त्वादिः, गुणस्य धर्मभेद उद्भूतत्वं, तदधीनत्वात् प्रत्यक्षस्य द्रव्यमात्रे उपलब्धेर्न नियमः। यत्रोद्भूतरूपमहत्त्वादिकं, तस्य प्रत्यक्षं तदभावाच्चक्षुरादेरप्रत्यक्षम्॥ चक्षुरादावुद्भूतरूपमेव न कुत इत्याशङ्कायां भाष्यं * "कर्मकारितश्चेन्द्रियाणां

---

* भाष्यवार्त्तिकटीकासु न्यायसूचीनिबन्धे चेदं सूत्रत्वेनाङ्कितमस्ति, तत्र अस्मात्सूत्रात्पूर्वं "अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः" इत्येकमपरमपि सूत्रं विद्यते। वार्तिककार इत्थं व्याचष्टे सूत्रमिदं—"अत्र रूपविशेषग्रहणेन रूपधर्म्मो उद्भवसमाख्योऽभिधीयते, न रूपत्वं, न रूपान्तराद्रूपं विशिनष्टि, अपितु उद्भवः, विशेषकत्वाद् विशेष इत्युच्यते, यथा ब्राह्मणविशेषः इति न ब्राह्मणत्वं ब्राह्मणविशेषः; एवं समानजातीयविशेषकत्वं यत् तद्विशेष इत्युच्यते। उद्भवश्च कार्यगम्यः, यस्याभावाद्विषक्तावयवमाप्यं द्रव्यं हेमन्ते न गृह्यते तैजसञ्च ग्रीष्मे, यस्य भावात्प्रदीपरश्मिरुपलभ्यते आदित्यरश्मिश्च, स उद्भवो नाम विशेषः, स तस्मिन् नायने रश्मौ रूपविशेषो नास्तीत्यतः चाक्षुषो रश्मिर्नोपलभ्यते। दृष्टश्च तेजसो धर्मभेदः; चतुर्विधश्च तेजो भवति (१) उद्भूतरूपस्पर्शं, यथा आदित्यरश्मिः; (२) उद्भूतरूपमनुद्भूतस्पर्शं, यथा प्रदीपरश्मिः; उभयं च प्रत्यक्षं रूपस्योद्भूतत्वात्। (३) उद्भूतस्पर्शमनुद्भूतरूपं, यथा वारिस्थितं तेजः; (४)

व्यूहः पुरुषार्थतन्त्रः" अदृष्टविशेषाधीन इन्द्रियाणां व्यूहो रचनाविशेष उपभोगसाधनमिति. सूत्रमेवेदमिति केचित् ॥ ३८ ॥

महतो रूपवतोऽनुपलब्धौ दृष्टान्तमाह—

मध्यन्दिनोल्काप्रकाशानुपलब्धिवत् तदनुपलब्धिः ॥३९॥

महतो रूपवतश्चोल्काप्रकाशस्य सौरालोकेनाभिभवात् मध्य-

अनुद्भूतरूपस्पर्शं यथा नायनं तेजः; उभयं च अप्रत्यक्षं रूपस्यानुद्भूतेः" इति ॥

'कर्म......तन्त्र' इत्यस्य वाक्यस्य व्याख्यानावसरे वार्त्तिककारः—"यदि नायनोरश्मिः उद्भूतस्पर्शो भवेत्, तेन दृश्यविशेषेऽनेकरश्मिसंनिधाने सति द्रव्यं दह्यते, अनेकरश्मिसंनिपाते च सति व्यवहितत्वाद्द्रव्यस्यानुपलब्ध्या भवितव्यम्। अथ मन्यसे यथादित्यरश्मिसंबद्धेऽर्थे नायनो रश्मिर्न व्यवधीयते, एवं रश्म्यन्तरसंनिपातेऽपीति। तन्न, व्यतिभिद्यार्थग्राहकत्वात्—व्यतिभिद्यादित्यरश्मिं तत्संबद्धेन द्रव्येण संबध्यते, उद्भूतरूपस्पर्शवत्त्वे चक्षुषो यस्य पूर्वं संनिपतितं चक्षुः तदितरेण व्यवहितमिति नार्थं गृह्णीयात्। अथानेकरश्मिसंनिपाते सति समानजातीयद्रव्येभ्यो द्रव्यान्तरं रश्मिरुत्पद्यते इति। एवं सति समग्रासमग्रचक्षुषोस्तुल्योपलम्भः प्राप्नोति। न चैतदिष्टमनुपलब्धेरिति, व्यवहारक्लृप्त्यर्थं च नायनस्य रश्मेरुद्भूतरूपस्पर्शवत्त्वमिति। सर्वद्रव्याणां विश्वरूपो व्यूहः पुरुषार्थकारितः इति। कर्म च धर्म्माधर्म्मरूपं चेतनस्योपभोगार्थमिति।

"कर्मकारित .... तन्त्रः" इतः परं भाष्यवार्तिकयोः "अव्यभिचाराच्च प्रतीघातो भौतिकधर्म्मः" इत्यपरं सूत्रं वर्तते। तच्च भाष्यकारेण इत्थं व्याख्यातम्—"यश्च आवरणोपलम्भादिन्द्रियस्य द्रव्यविशेषे प्रतिघातः स भौतिकधर्मः, न भूतानि व्यभिचरति; नाभौतिकं प्रतिघातधर्मकं दृष्टमिति। अप्रतीघातस्तु व्यभिचारी भौतिकाभौतिकयोः समानत्वादिति यदपि मन्यते—प्रतिघाताद्भौतिकानि इन्द्रियाणि अप्रतिघातादभौतिकानि इति प्राप्तम्, दृष्टश्चाप्रतिघातः काचाभ्रपटलस्फटिकान्तरितोपलब्धेः। तन्न युक्तम्, कस्मात्? यस्माद् भौतिकमपि न प्रतिहन्यते काचाभ्रपटलस्फटिकान्तरितप्रकाशात् प्रदीपरश्मीनां स्थाल्यादिषु पाचकस्य तेजसोऽप्रतिघातः इति ॥

न्द्रिनेऽनुपलब्धिवदनुद्भूतरूपवत्त्वाच्चक्षुषोऽप्यनुपलम्भः सम्भवतीति भावः ॥ ३६ ॥

नन्वेवं घटादावपि रश्मिः स्यात्सौरालोकेनाभिभवात् पुनरग्रह इत्यत्राह—

**न रात्रावप्यनुपलब्धेः ॥ ४० ॥**

नेत्यस्य घटादौ रश्मिरिति शेषः * ॥ ४० ॥

नन्वनुद्भूतरूपवत्त्वाच्चक्षुषोऽनुपलब्धिः, न त्वभिभवादित्यत्र किं विनिगमकमिति तटस्थाशङ्कायामाह—

**बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरनभिव्यक्तितो-ऽनुपलब्धिः † ॥ ४१ ॥**

अनभिव्यक्तितोऽनुद्भूतरूपवत्त्वाच्चक्षुषोऽनुपलब्धिः । कुतः ? बाह्यप्रकाशानुग्रहात् । सौरालोकादिसाहित्याद्विषयोपलब्धेः तस्योद्भूतरूपवत्त्वे बाह्यप्रकाशापेक्षा न स्यात् । अभिभूतत्वे च तत्साहित्येनापि प्रत्यक्षजननं न स्यादभिभूतस्य कार्य्याक्षमत्वादिति भावः ॥ ४१ ॥

ननु चक्षुषो नाभिभवः, किंतु तद्रूपस्य, तस्य च प्रत्यक्षजन-

---

* "व्यञ्जकाभावादिति चेत् ? न हि यद यस्याभिभावकं तत् तस्याभिव्यञ्जकमिति । कथं न प्राप्नोति लोष्ठादिरश्मीनामुपलम्भः अनमाक्तश्च नोपलभ्यते लोष्ठरश्मिरित्यपिशब्दात् ( सूत्रस्थ 'अपि' शब्दात् ) गम्यते । तदेवं सर्वप्रमाणनिवृत्तं न विद्यते लोष्ठरश्मिः । न पुनरेवं चाक्षुषो रश्मिर्निरनुमाना कुड्यादेरावरणस्य सामर्थ्यादिति ।"

† 'दृष्टान्तस्थान एवैतत्सूत्रम्' ( न्या० वा० ) 'अनभिव्यक्तितो-ऽनुद्भूतेरित्यर्थः । अत्र हेतुः बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेः, विषयश्चस्वरूपमात्मनोऽन्यच्च । एतदुक्तं भवति—यत् उपलब्ध बाह्यप्रकाशमनुग्राहकमपेक्षते, तस्यानुद्भूतेरेवानुलब्धिर्न त्वभिभूतेः, यथा हेमन्ते विषक्तावयवस्याप्यस्य द्रव्यस्य । आप्यं हि द्रव्यं विषक्तावयवं स्वविषयोपलब्धौ बाह्यप्रकाशानुग्रहमपेक्षमाणं दृष्टं, चक्षुरपि च विषयोपलब्धौ बाह्यप्रकाशमपेक्षते निरालोके तस्याप्रवृत्तेः । तस्माद्विषयोपलब्धौ बाह्यप्रकाशापेक्षत्वात्तदनुद्भूत्या न प्रतीयते न पुनरभिभूत्येति सिद्धं प्रकृतम् । " ( ता० टी० )

कत्वे मानाभावः, किं चाभिभवात् तस्य न प्रत्यक्षमितरप्रत्यक्षजनने च विरोधाभाव इत्याशङ्कायामाह—

अभिव्यक्तौ चाभिभवात् ॥ ४२ ॥

रूपस्य अभिव्यक्तौ=प्रत्यक्षे उद्भूतत्व इति यावत्। उद्भूतरूपस्य प्रत्यक्षाभावे ह्यभिभवकल्पना, न त्वेवं प्रकृते। सुवर्णादिवत् सर्वदाभिभावकद्रव्यान्तरकल्पने गौरवमिति भावः ॥ ४२ ॥

चक्षुषि प्रमाणान्तरमाह—

नक्तंचरनयनरश्मिदर्शनाच्च ॥ ४३ ॥

नक्तञ्चराणां वृषदंशादीनां गोलके रश्मिदर्शनात्। तद्दृष्टान्तेन परेषामपि रश्म्यनुमानमिति भावः। अन्यथा तमसि तस्य प्रत्यक्षं न स्याद् इति हृदयम् ॥ ४३ ॥

अप्राप्यकारित्वं चक्षुषः स्यादित्याशङ्कते—

*अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥ ४४ ॥

समाधत्ते—

कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४५ ॥

परे तु † उक्तसूत्रस्य पूर्वपक्षपरत्वं मन्यमानस्य भाष्यकारस्यावतरणिका 'अप्राप्यग्रहणम्' इति। वस्तुतः सिद्धान्तसूत्रमेव तत्, प्रदीपदृष्टान्तेन काचाद्यन्तरितप्रकाशकत्वेन तैजसत्वं सिध्यतीति। नन्वप्राप्यकारित्वमेव किं न स्यादत्राह—कुड्येति। उक्तस्य तैजसत्वस्य प्रतिषेधो गोलकात्मकत्वे न संभवति कुड्यान्तरितस्यानुपलब्धेरित्याहुः ॥ ४५ ॥

ननु कुड्यान्तरित इव काचान्तरितेऽपि सन्निकर्षो न संभवतीति कथं प्राप्यकारित्वमित्याशङ्कायामाह—

---

* तृणादिसर्पद् द्रव्यं काचेऽभ्रपटले वा प्रतिहन्यते। यदि चक्षुषो रश्मिः प्राप्तार्थप्रकाशकः स्यात्। काचाभ्रपटलैरान्तरिते प्रकाशको न स्यात्। अस्तितु। तस्मान्न प्राप्यकारि चक्षुरिति, अत एवाभौतिकम्। प्राप्यकारित्वं भौतिकधर्म्मः। (न्या० वा०)

† उक्तसूत्रस्य=नक्तचरनयनरश्मिदर्शनाच्च इतिसूत्रस्य

**अप्रतिघातात् सन्निकर्षोपपत्तिः ॥ ४६ ॥**

काचादिना स्वच्छद्रव्येणाप्रतिघाताद् = अप्रतिबन्धात् सन्निकर्ष उपपद्यत इति भावः ॥ ४६ ॥

तत्र दृष्टान्तमाह—

*** आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्या-ऽविघातात् ॥ ४७ ॥**

दाह्ये इति वस्तुमात्रोपलक्षणम् । परे तु दाह्ये कपालादौ वन्ह्या-देरविघातपरं तदित्याहुः ॥ ४७ ॥

आक्षिपति—

**नेतरेतरधर्मप्रसङ्गात् ॥ ४८ ॥**

अप्रतिघातो न युक्तः इतरस्य = स्फटिकादेरितरस्य=कुड्यादेर्यो धर्मः प्रतिघातत्वं तत्प्रसङ्गात् । स्फटिकादिकमपि कुड्यादिवत् प्रति-बन्धकं भवेदित्यर्थः ॥ ४८ ॥

---

* न आदित्यरश्मेरविघातात् स्फटिकान्तरितेऽप्यविघाताद् दाह्ये-ऽविघातात् । अविघातादिति च पदाभि संबन्धाद्वाक्यभेद इति । यथावाक्यं चार्थभेद इति । आदित्यरश्मिः कुम्भादिषु न प्रतिहन्येत-ऽविघातात् । कुम्भस्थमुदकं तपति प्राप्तौ हि द्रव्यान्तरगुणस्य उष्णस्य स्पर्शस्य ग्रहणं तेन च शीतस्पर्शाभिभव इति । स्फटिका न्तरितेऽपि प्रकाशनीये प्रदीपरश्मीनामप्रतिघातः, अप्रतीघातात्प्राप्तस्य ग्रहणमिति । भर्जनकपालादिस्थं च द्रव्यमाग्नेयेन तेजसा दह्यते, तत्राविघातात्प्राप्तिः, प्राप्तौ तु दाहो, नाप्राप्यकारि तेज इति ॥ अविघा-तादिति च केवलं पदमुपादीयेत, कोऽयं अविघातो नाम ? अव्यूह्य-मानावयवेन व्यवधायकेन द्रव्येण सर्वतो द्रव्यस्याविष्टम्भः क्रियाहेतो-रप्रतिबन्धः प्राप्तेरप्रतिषेध इति । दृष्टं हि कलशनिषक्तानामपां बहिः शीतस्पर्शग्रहणम् । न चेन्द्रियेणासन्निकृष्टस्य द्रव्यस्य स्पर्शोपलब्धिः। दृष्टौ परिस्पन्दपरिस्रवौ । तत्र काचाभ्रपटलादिभिर्नायनरश्मेर-प्रतिघातात् विभिद्यार्थेन सन्निकर्षादुपपन्नं ग्रहणमिति ॥ ( भा० )

यस्य द्रव्यस्यावयवा न व्यूह्यन्ते न तस्यान्तरावयवैरव्यूह्यमानस्य योऽभिसंबन्धः सोऽविघात इति। अन्तर्व्यवस्थितस्थ वा द्रव्यस्य ऽव्यूह्यमानावयवद्रव्यस्य बहिरवस्थितद्रव्यप्राप्तिः । ( न्या० वा० )

परिस्पन्दः=तिर्यग्गमनं, परिस्रवः=पातः ॥

समाधत्ते—

**आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्
तदुपलब्धिः ॥ ४९ ॥**

आदर्शे उदके च * प्रसादस्वाभाव्यात्=स्वच्छस्वभावत्वात् मुखादिरूपोपलब्धिर्न तु भित्त्यादौ । एवं स्फटिकाद्यन्तरितस्योपलब्धिर्न तु कुड्याद्यन्तरितस्येति स्वाभाव्यान्न दोषः । एतेन वह्न्यादेर्घटादिनाऽप्रतिघातवच्चक्षुषोऽपि प्रतिघातो न स्यादिति प्रत्युक्तं वह्न्याद्यप्रतिबन्धेऽपि प्रतिबन्धवत् संभवादिति भावः ॥ ४९ ॥

चक्षुषस्तादृशत्वकल्पने किं मानमित्यत्राह—

**दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः ॥५०॥**

हि=यस्माद् दृष्टानामनुमितानां वा पदार्थानां, दृष्टेनानुमितानामिति वाऽर्थः, तेषामेवं भवितेति नियोगः, एवं मा भवितेतिनिषेधो वा नोपपद्यते; युक्त्यनुसारिणी हि कल्पनेति भावः † ॥ ५० ॥

समाप्तमिन्द्रिय-( भौतिकत्व-) परीक्षाप्रकरणम् ॥ ७ ॥

---

दर्शनस्पर्शनाभ्यामित्यादिकमिन्द्रियनानात्वे युज्यत इत्युपोद्घातेनेन्द्रियनानात्वं परीक्षणीयम्, तत्र संशयमाह—

**स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च
संशयः ॥ ५१ ॥**

स्थानान्यत्वे=स्थानभेदे घटपटादीनां नानात्वदर्शनात् नानावयवस्थितस्यावयविन एकत्वदर्शनाच्च इन्द्रियाणां नानात्वमेकत्वं वेति संशयः ॥ ५१ ॥

---

*प्रसादः=रूपविशेषः द्रव्यान्तरासंयुक्तद्रव्यसमवायः । तस्य वा रूपोपलम्भनसामर्थ्यम् । ( न्या० वा० )

†यदि प्राप्यकारि चक्षुः भवति, अथ कस्मादञ्जनशलाकादि नोपलभ्यते ? न इन्द्रियासम्बन्धात्=इन्द्रियेण सम्बद्धा अर्था उपलभ्यन्ते, न चाञ्जनशलाकादि इन्द्रियेण सम्बद्धम् । अधिष्ठानस्यानिन्द्रियत्वात्=रश्मिरिन्द्रियं, नाधिष्ठानं; न रश्मिनाऽञ्जनशलाका सम्बद्धेति । ( न्या० वा० )

पूर्वपक्षसूत्रम्—

**त्वगव्यतिरेकात् ॥ ५२ ॥**

सर्वेष्विन्द्रियप्रदेशेष्वव्यतिरेकात्=सत्त्वात् त्वगेवैकमिन्द्रियमस्तु ॥ ५२ ॥

उत्तरयति—

*** न युगपदर्थानुपलब्धेः ॥ ५३ ॥**

युगपत्=एकदा अर्थानां=गन्धरूपादीनाम् अनुपलब्धेर्न त्वगेवैकमिन्द्रियम् । अन्यथा तस्य व्यापकत्वाच्चाक्षुषादिकाले घ्राणजादिकमपि स्यादिति भावः ॥ ५३ ॥

---

* "नेन्द्रियार्थानुपलब्धेः" "त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः" "व्याहतत्वादहेतुः" इति वाक्यत्रयस्य कालिकातामुद्रितपुस्तके सूत्रत्वेन लेखः प्रमादिकः, वार्त्तिकन्यायसूचीनिबन्धादावदर्शनात् । भाष्यकारस्य वचनानीमानि, तद्व्याख्यानमपि भाष्यकृता कृतमस्ति—यथा—"स्पर्शोपलब्धिलक्षणायां सत्यां त्वचि गृह्यमाणे त्वगिन्द्रियेण स्पर्शे इन्द्रियार्था रूपादयो न गृह्यन्ते अन्धादिभिः । न स्पर्शग्राहकादिन्द्रियादिन्द्रियान्तरमस्तीति स्पर्शवदन्धादिभिर्गृह्येरन् रूपादयो, न च गृह्यन्ते, तस्मान्नैकमिन्द्रियं त्वगिति । त्वग००० लब्धिः=यथा त्वचोऽवयवविशेषः कश्चिच्चक्षुषि सन्निकृष्टो धूमस्पर्शं गृह्णाति नान्यः, एवं त्वचोऽवयवविशेषा रूपादिग्राहकास्तेषामुपघातादन्धादिभिर्न गृह्यन्ते रूपादय इति । व्याहतत्वादहेतुः=त्वगव्यतिरेकादेकमिन्द्रिमित्युक्त्वा त्वगवयवविशेषेण धूमोपलब्धिवद्रूपाद्युपलब्धिरित्युच्यते, एवं च सति नानाभूतानि विषयग्राहकाणि, विषयव्यवस्थानात् तद्भावे विषयग्रहणस्य भावात्तदुपघाते चाभावात् । तथा च पूर्वो वाद उत्तरेण वादेन व्याहन्यत इति"।

व्याघातः वार्त्तिककृता दर्शितः यथा—"प्रागेकमिन्द्रियं त्वगित्युपगम्य इदानीं त्वगवयवविशेषा रूपादिग्राहका इति ब्रुवाणः प्रतिषेध्यमभ्यनुजानाति । न ह्यवयव्यनतिरिक्ता अवयवा इति । यांश्चावयवान् रूपादिग्राहकाँस्त्वचो मन्यते, ते किमिन्द्रियात्मका उत नेति। किं चातः ? यदीन्द्रियात्मका नैकमिन्द्रियम् । अथेन्द्रियात्मका न भवन्ति न तर्हीन्द्रियग्राह्या रूपादयः इति"।

इन्द्रियाणां नानात्वे कार्य्यभेदमानमाह—

* इन्द्रियार्थपञ्चत्वात् ॥ ५४ ॥

इन्द्रियार्थानाम्=इन्द्रियग्राह्याणां रूपादीनां, पञ्चत्वात्=पञ्चविधत्वात्। रूपादीनां हि चक्षुराद्येकैकेन्द्रियमात्रग्राह्यत्वाद्वैलक्षण्यं, तच्चैकेन्द्रियपक्षे न सम्भवति; अन्धादीनां रूपाद्युपलब्धिप्रसङ्गश्चेति भावः ॥ ५४ ॥

शङ्कते—

न तदर्थबहुत्वात् ॥ ५५ ॥

इन्द्रियार्थानां=नीलपीतादीनां बहुत्वाद् इन्द्रियाणां बहुतरत्वप्रसङ्गादिन्द्रियार्थपञ्चत्वादिन्द्रियभेदो न युक्तः ॥ ५५ ॥

समाधत्ते—

गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥ ५६ ॥

उक्तप्रतिषेधो न गन्धादीनां सौरभादीनां, गन्धत्वाद्यव्यतिरेकाद्=गन्धत्वादिसत्त्वात्; तथा च गुणविभाजकगन्धत्वावच्छिन्नग्राहकत्वमभिप्रेतं, न त्ववान्तरधर्मावच्छिन्नग्राहकत्वमिति भावः ॥ ५६ ॥

यदि गन्धत्वादीनां सौरभादीनामैक्यं, तदा विषयत्वेन गन्धरसादीनामप्यैक्यादिन्द्रियैक्यं स्यादिति शङ्कते—

विषयत्वाव्यतिरेकादेकत्वम् ॥ ५७ ॥

विषयत्वाव्यतिरेकाद्=विषयत्वेनैक्यात् ॥ ५७ ॥

---

* इतः पूर्वं "विप्रतिषेधाच्च न त्वगेका" इत्येकं सूत्रं भाष्यादावुपलभ्यते। तस्य व्याख्यानं—"न खलु त्वगेकमिन्द्रियं व्याघातात्। त्वचा रूपाणि अप्राप्तानि गृह्यन्ते इति। अप्राप्यकारित्वे स्पर्शादिष्वप्येवं प्रसङ्गः, स्पर्शादीनां च प्राप्तानां ग्रहणाद्रूपादीनां प्राप्तानामग्रहणमिति प्राप्तम्। सामिकारित्वमिति चेद्, आवरणानुपपत्तेर्विषयमात्रस्य ग्रहणम्। अथापि मन्यते प्राप्ताः स्पर्शादयस्त्वचा गृह्यन्ते, रूपाणि तु अप्राप्तानीति एवं सति नास्त्यावरणम्, आवरणानुपपत्तेश्च रूपमात्रस्य ग्रहणं व्यवहितस्य चाव्यवहितस्य चेति। दूरान्तिकानुविधानं च रूपोपलब्ध्यनुपलब्ध्यार्न स्यात्। अप्राप्तं त्वचा गृह्यते रूपमिति दूरे रूपस्याग्रहणमन्तिके च ग्रहणमित्येतन्न स्यादिति।"

उत्तरयति—

**न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ॥५८॥**

इन्द्रियाणामैक्यं न; हेतुमाह-बुद्धीत्यादि। बुद्धेश्चाक्षुषादेर्यल्लक्षणं चाक्षुषत्वादि, तत् पञ्चत्वेन, तदवच्छिन्नकरणानां पञ्चत्वम्। एवमधिष्ठानं=रूपादिर्विषयः, तत्पञ्चत्वात्। गतिः=दूरादौ गमनम्, इदं चक्षुरधिकृत्य, यद्वा गतिः=प्रकारः, तथा च प्रकाराणां पञ्चत्वात्, चक्षुर्हि गत्वा गृह्णाति, त्वग्देहावच्छेदेन, *श्रोत्रं कर्णावच्छेदेनेत्यादिप्रकारभेदात्। आकृतिः=गोलकानां संस्थानविशेषः। †जातिः =पृथिवीत्वादि, वस्तुतो जातिः=धर्मः, तेन श्रोत्रत्वसंग्रहः ॥ ५८ ॥

घ्राणादेः पृथिवीत्वादिमत्त्वे मानमाह—

**भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ ५९ ॥**

भूतानां=पृथिव्यादीनां, ये गुणविशेषाः=गन्धादयः, तदुपलम्भकत्वात्; कुङ्कुमगन्धाभिव्यञ्जकघृतादिदृष्टान्तेन पृथिवीत्वादिसाधनमिति भावः ‡ ॥ ५९ ॥

समाप्तमिन्द्रियनानात्वप्रकरणम् ॥ ८ ॥

* धर्म्माधर्म्मसहितया इष्टानिष्टोपेक्षणीयशब्दसाधनभूतया कर्णशष्कुल्या य आकाशस्य संबन्ध, तत्संबन्धानुविधायि आकाशं, न विवरान्तरेण=आस्यादिना शब्दमुपलक्षयति नान्यत्रेति तदुपकारप्रतीकारभेदाद्धोपक्रियते प्रतिक्रियते चेति, न च पुनराकाशं नित्यत्वादुपक्रियते (न) प्रतिक्रियते इति। प्रकृष्टापकृष्टश्रोत्रभेदोऽप्यत एव। (न्या० वा०)

† जातिरिति योनिं प्रचक्षते। पञ्च खल्विमा इन्द्रिययोनयः, पृथिव्यादीनि भूतानि इन्द्रियाणां योनयः इति, योनिस्तादात्म्यं, न पुनस्तत्कार्यत्वमाकाशे संभवति नित्यत्वात्। (न्या० वा०)

‡ पार्थिवं घ्राणं रूपरसगन्धस्पर्शेषु नियमेन गन्धस्य व्यञ्जकत्वाद् बाह्यपार्थिववदिति। यथा हि मृगमदगन्धव्यञ्जकाः कुङ्कुटीक्षारादयः पार्थिवा इत्यर्थः। न चातपेनानेकान्तः। न हि आतपो गन्धव्यञ्जकः, अपि तु जलाभिभूतो गन्धो द्रव्याणां नोपलभ्यते. केवलं जलमातपोऽपनयति, न तु गन्धं द्रव्यस्य अभिव्यनक्ति, तस्मा-

क्रमप्राप्तार्थपरीक्षणाय सिद्धान्तसूत्रम्—

* गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः॥६०॥

अप्तेजोवायूनां पूर्वपूर्वमपोह्याकाशस्योत्तरः† ॥ ६१ ॥

स्पर्शपर्यन्तेषु मध्ये पूर्वंपूर्वं त्यक्त्वाऽप्तेजोवायूनां गुणा ज्ञात-

---

व्यानैकान्तः। एवं रसनमिन्द्रियं आप्यं गन्धादिषु मध्ये नियमेन रसस्य व्यञ्जकत्वात् प्रदीपादिवत्। एवं वायवीयं त्वगिन्द्रियं गन्धादिषु मध्ये स्पर्शस्य व्यञ्जकत्वात् स्वेदोदविन्दुशीतस्पर्शव्यञ्जकव्यजनपवनवत्। नियमग्रहणं मनोनिवृत्त्यर्थम्। गन्धादिषु मध्ये चावधारणसिद्ध्यर्थम्। अन्यथा घ्राणादीनां गन्धत्वादिव्यञ्जकत्वेनावधारणं न स्यात्।.........एवं चेन्द्रियपञ्चत्वेन हस्तपादपायूपस्थवाचामिन्द्रियत्वनिषेधोपि सूचितः इन्द्रियलक्षणविरहात्। यच्छरीरसंयुक्तं संस्कारदोषव्यतिरिक्तं साक्षात्प्रतीतिसाधनं तदिन्द्रियमिति हि इन्द्रियलक्षणं, न चैतदस्ति हस्तादिषु। तत् ज्ञानेन्द्रियाणां लक्षणं इमानि कर्मेन्द्रियाणि इति चेत्। हन्त! एषामिन्द्रियत्वलक्षणान्तरं वक्तव्यम्। शरीराश्रितमसाधारणकार्यकारि इन्द्रियमिति लक्षणमिति चेत्, वक्तव्यमेषामसाधारणं कार्यम्। उक्तं—वचनादानविहरणोत्सर्गानन्दाः पञ्चानामिति। नन्वादानविहरणोत्सर्गास्तावद्वक्त्रहस्तादिभिरपि शक्या कर्त्तुम्। अपि चास्ति कण्ठहृदयामाशयपक्वाशयादीनां निगरणादितत्तदसाधारणं कार्यमिति तान्यपि इन्द्रियाणि प्रसज्येरन् इति तस्माद्यत्किञ्चिदेतत्। (ता० टी०)

* अत्रत्यात् वार्त्तिककृद्व्याख्यानगतात् "नियमार्थं सूत्रे" इति वचनात् "गन्ध......त्तरः" इति नेदंएकं सूत्रम्, अपि तु सूत्रद्वयम् वार्त्तिके न्यायसूचीनिबन्धे च तथैव सत्त्वात्। अतः एकसूत्रत्वेन लेखः प्रामादिकः। अतएव वृत्त्यवतरणिकायां 'सिद्धान्तसूत्रे' इतियुक्तं, नतु 'सि००त्रम्

† उत्तर इत्ययं तरब्निर्देशो न युक्तः द्वयोः दृष्टत्वात्, इह पुनः प्रकृष्टवाचित्वे सति उत्तम इति स्यात्। नायं तरब्निर्देशः अपि तु पराभिधानमेतत्—यदुक्तं भवति पर इति तदुक्तं भवति उत्तर इति; लब्धं वा स्पर्शस्य विवक्षितत्वात्—भवतु वा तरब्निर्देशः, ननूक्तं उत्तमः इति प्राप्नोति? न स्पर्शस्य विवक्षितत्वात्, गन्धादिभ्यः परः स्पर्शः, स्पर्शादयं पर इति यावदुक्तं भवति तावदुक्तं भवति उत्तर इति। (न्या० वा०)

व्याः, उत्तरः शब्दः आकाशस्य गुणः, तथा च स्पर्शपर्य्यन्ताः पृथिव्याः, रसरूपस्पर्शा जलस्य, रूपस्पर्शौ तेजसः, स्पर्शो वायोः, शब्द आकाशस्य ॥ ६० ॥ ६१ ॥

आक्षिपति—

न सर्वगुणानुपलब्धेः ॥ ६२ ॥

उक्तो गुणनियमो न युक्तः; पृथिव्यादिगुणत्वेनाभिमतानां सर्वेषां घ्राणादिग्राह्यत्वाभावान्न पार्थिवत्वादिकं, घ्राणेन पृथिव्या रसाद्यग्रहणात्। बहिरिन्द्रियाणां स्वप्रकृतिवृत्तियोग्यविशेषगुणग्राहकत्वनियमो भज्येतेति भावः ॥ ६२ ॥

इत्थं च पृथिव्यादावुपलभ्यमानानां रसादीनां का गतिरित्यत्र स्वमतमाह—

* एकैकस्यैवोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः ॥ ६३ ॥

उत्तरोत्तराणाम्-अबादीनाम्, एकैकस्यैव=एकैकक्रमेण, उत्तरोत्तरगुणसद्भावात्=रसादिगुणसद्भावात्, तदनुपलब्धिः, तेषां=रसादीनां घ्राणादिनानुपलब्धिरित्यर्थः ॥ ६३ ॥

तर्हि कथं पृथिव्यादौ रसादिग्रहणं तत्राह—

† संसर्गाच्चानेकगुणग्रहणम् ॥ ६४ ॥

‡ विष्टं ह्यपरं परेण ॥ ६५ ॥

अपरं=पृथिव्यादि, परेण=जलादिना, हि=यस्मात्, विष्टं=

---

* भाष्यवार्तिकन्यायसूचीनिबन्धादिषु "एकैकश्येनोत्तर०" इति पाठोऽस्ति। एकैकश्यम्=एकैकशस्य भावः क्रम इति यावत्।

† वार्त्तिकन्यायसूचीनिबन्धमतानुसारेण नेदं सूत्रम्। वृत्तिकृतापि अस्य व्याख्यानं न कृतम्। इदं व्याख्येयभाष्यम् इतिकेचित्, अस्य व्याख्यानं तु—"अबादिसंसर्गाच्च पृथिव्यां रसादयो गृह्यन्ते, एवं शेषेष्वपीति"। (भा०)

‡ "नियमस्तर्हि न प्राप्नोति संसर्गस्यानियमाच्चतुर्गुणा पृथिवी, त्रिगुणा आपः, द्विगुणं तेजः, एकगुणो वायुरिति? नियमश्चोपपद्यते। कथम्" इति अवतारभाष्यं विष्टमित्यस्य सूत्रस्य।

संबद्धम्। तथा च पृथिव्याद्यवच्छिन्नजलादिना रसनासंयोगाद्रसादिग्रह इति भावः॥ ६४॥ ६५॥

सिद्धान्तसूत्रम्—

* **न पार्थिवाप्ययोः प्रत्यक्षत्वात्॥ ६६॥**

उक्तो गुणनियमो न युक्तः। कुतः? पार्थिवस्याप्यस्य च द्रव्यस्य प्रत्यक्षत्वाद्रूपस्पर्शसिद्धेः, तस्य रूपस्पर्शशून्यत्वे चक्षुषा त्वचा च ग्रहणं न स्याद्, रूपादेश्च क्वचित्साक्षात्संबंधेन क्वचिच्च परम्परया हेतुत्वे गौरवमिति भावः॥ ६६॥

---

* भाष्येऽस्य सूत्रस्य विकल्पेनाऽनेका अर्थाः वर्णिताः, अतोऽस्य भाष्यमत्रोपन्यस्येत—"नेति त्रिसूत्रीं प्रत्याचष्टे। कस्मात्? पार्थिवस्य द्रव्यस्य आप्यस्य च प्रत्यक्षत्वात् महत्त्वानेकद्रव्यत्वाद्रूपाच्चोपलब्धिरिति तैजसमेव द्रव्यं प्रत्यक्षं स्यात्। न पार्थिवमाप्यं वा रूपाभावात्। तैजसवत्तु पार्थिवाप्ययोः प्रत्यक्षत्वात् न संसर्गादनेकगुणग्रहणं भूतानामिति। भूतान्तररूपकृतं च पार्थिवाप्ययोः प्रत्यक्षत्वं ब्रुवतः प्रत्यक्षो वायुः प्रसज्यते, नियमे वा कारणमुच्यतामिति। रसयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात् पार्थिवो रसः षड्विधः, आप्यो मधुर एव। न चैतत्संसर्गाद्भवितुमर्हति। रूपयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात् तैजसरूपानुगृहीतयोः संसर्गे हि व्यञ्जकमेव रूपं, न व्यङ्ग्यमस्ति इति। एकानेकविधित्वे च पार्थिवाप्ययोः प्रत्यक्षत्वात् रूपयोः पार्थिवं हरितलोहितपीताद्यनेकविधं रूपमाप्यं तु शुक्लमप्रकाशकं न चैतदेकगुणानां संसर्गे सति उपलभ्यते इति। उदाहरणमात्रं चैतत्। अतः परं प्रपंचः। स्पर्शयोर्वा पार्थिवतैजसोः प्रत्यक्षत्वात् पार्थिवोऽनुष्णाशीतः स्पर्शः, उष्णस्तैजसः प्रत्यक्षो, न चैतदेकगुणानामनुष्णाशीतस्पर्शेन वायुना संसर्गेणोपपद्यते इति। अथवा पार्थिवाप्ययोर्द्रव्ययोर्व्यवस्थितगुणयोः प्रत्यक्षत्वाच्चतुर्गुणं पार्थिवं द्रव्यं त्रिगुणमाप्यं प्रत्यक्षं, तेन तत्कारणमनुमीयते तथाभूतमिति। तस्य कार्यं लिङ्गं कारणभावाद्धि कार्य्यभाव इति। एवं तैजसवायव्योर्द्रव्ययोः प्रत्यक्षत्वात् गुणव्यवस्थायाः तत्कारणे द्रव्ये व्यवस्थानुमानमिति। दृष्टश्च विवेकः पार्थिवाप्ययोः प्रत्यक्षत्वात् पार्थिवं द्रव्यमबादिभिर्वियुक्तं प्रत्यक्षतो गृह्यते आप्यं च पराभ्यां, तैजसं च वायुना, न चैकैकगुणं गृह्यते इति निरनुमानं तु 'विष्टं ह्यपरं परेण'

रसादेः पृथिव्यादिगुणत्वे घ्राणादिनाऽपि तद्ग्रहणप्रसङ्ग इत्यत्र नियामकमाह—

पूर्वंपूर्वंगुणोत्कर्षात्तत्तत्प्रधानम् ॥ ६७ ॥

पूर्वं पूर्वं=घ्राणादि, तत् तत्प्रधानं=गन्धादि प्रधानं; प्राधान्ये बीजमाह—गुणोत्कर्षात्; गुणस्य=गन्धादेरुत्कर्षात् तद् व्यवस्थापकत्वात्। तथा च गन्धादिषु मध्ये स्वव्यवस्थापकगुणस्यैव ग्राहकत्वं घ्राणादीनामिति ॥ ६७ ॥

ननु पृथिव्यन्तरस्यापि गन्धप्राधान्यात् किमिन्द्रियं किमनिन्द्रियमित्यत्राह—

तद्व्यवस्थानं तु * भूयस्त्वात् ॥ ६८ ॥

भूयस्त्वात्=जलाद्यविशिष्टपृथिव्याद्यारब्धत्वात्, तद्व्यवस्थानं=घ्राणादीन्द्रियत्वव्यवस्थितिः ॥ ६८ ॥

घ्राणादीनां गन्धादिगुणवत्त्वे मानमाह—

† सगुणानामिन्द्रियभावात् ॥ ६९ ॥

सगुणानां=गन्धादिविशिष्टानां घ्राणादीनाम्, इन्द्रियभावात्=गन्धादिसाक्षात्कारकारणत्वात्, कुङ्कुमगन्धाभिव्यञ्जकघृतादौ तथैव दर्शनात् ॥ ६९ ॥

---

इत्येतदिति। नात्रलिंगमनुमापकं गृह्यते इति येनैतदेवं प्रतिपद्येमहि। यच्चोक्तं 'विष्टं हि अपरं परेण' इति तद्भूतसृष्टौ वेदितव्यं न साम्प्रतमिति नियमकारणाभावादयुक्तम्। दृष्टं च साम्प्रतमपरं परेण विष्टमिति वायुना च विष्टं तेज इति। विष्टत्वं संयोगः स च द्वयोः समानो, वायुना च विष्टत्वात्स्पर्शवत्तेजो न तु तेजसा विष्टत्वाद्रूपवान् वायुरिति नियमकारणं नास्तीति, दृष्टं च तैजसेन स्पर्शेन वायव्यस्य स्पर्शस्याभिभवादग्रहणमिति न च तेनैव तस्याभिभवः इति।"

* किं पुनरिदं भूयस्त्वम्? अर्थनिर्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गः पुरुषसंस्कारकारितो भूयस्त्वम्। दृष्टो हि प्रकर्षे भूयस्त्वशब्दः, यथा लोके प्रकृष्टो विषय भूयानित्युच्यते। (न्या० वा०)

† स्वान् गन्धादीन् नोपलभन्ते घ्राणादीनि। केन कारणेनेति चेत्? स्वगुणैः सह घ्राणादीनामिन्द्रियभावात्। घ्राणं स्वेन गन्धेन समानार्थकारिणा सह बाह्यं गन्धं गृह्णाति तस्य स्वगन्धग्रहणं सहकारिवैकल्यान्न भवति। एवं शेषाणामपि ॥ ( भा० )

इत्थं च गन्धादिसिद्धावप्रत्यक्षत्वादनुद्भूतत्वकल्पनमित्याशयेनाह-

**तेनैव तस्याग्रहणाच्च ॥ ७० ॥**

तेन=इन्द्रियेण, तस्य=सगुणस्येन्द्रियस्य, अग्रहणादनुद्भूतत्वकल्पनमिति ॥ ७० ॥

नन्विन्द्रियगुणानामप्रत्यक्षत्वनियमो नेत्याशङ्कते—

**न शब्दगुणोपलब्धेः ॥ ७१ ॥**

उक्तनियमो न युक्तः शब्दस्य श्रोत्रगुणस्योपलब्धेः ॥ ७१ ॥

समाधत्ते—

*** तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७२ ॥**

द्रव्यगुणानां=रूपशब्दादीनां, परस्परं वैधर्म्याच्छब्दस्योपलब्धिर्न चक्षूरूपादीनां, शब्दाश्रयस्य लाघवेनैक्यसिद्धेरिति भावः ॥७२॥

समाप्तमर्थपरीक्षाप्रकरणम् ॥ ६ ॥

इति श्रीविश्वनाथभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ आत्मादिप्रमेयचतुष्टयपरीक्षणं नाम तृतीयाध्यायस्याद्यमाह्निकम् ॥

* "न शब्देन गुणेन सगुणमिन्द्रियं भवति। न शब्दःशब्दस्य व्यञ्जकः न च घ्राणादीनां स्वगुणग्रहणं प्रत्यक्षं नाप्यनुमीयते। अनुमीयते तु श्रोत्रेणाकाशेन शब्दस्य ग्रहणं शब्दगुणत्वं चाकाशस्येति। परिशेषश्चानुमानं वेदितव्यम्। आत्मा तावत् श्रोता, न करणं, मनसः श्रोत्रत्वे बधिरत्वाभावः पृथिव्यादीनां घ्राणादिभावे सामर्थ्यं, श्रोत्रभावे चासामर्थ्यम्। अस्ति चेदं श्रोत्रमाकाशं च परिशिष्यते, परिशेषादाकाशं श्रोत्रमिति।" (भा०)॥ "मनसः श्रोत्रत्वे बधिराद्यभावः सर्वविषयत्वाच्च मनसः सर्वविषयं श्रोत्रं प्राप्नोति। पृथिव्याद्यपि न श्रोत्रं, घ्राणादिभावे विनियोगात्। घ्राणादिविनियुक्ताः पृथिव्यादयः, श्रोत्रभावे च घ्राणादीनां तद्वैकल्ये शब्दानुपलब्धिप्रसङ्गः। त्वचःश्रोत्रत्वे बधिराभावः सर्वोपघाते च प्रायणम्। दिक्कालयोः श्रोत्रत्वे च शब्दस्यान्यगुणत्वादग्रहणप्रसंगः। तद्गुणत्वमितिचेन्नास्मिन् विवादः। यस्य शब्दो गुणस्तदाकाशं भवता संज्ञामात्रं भिद्यते तौ दिक्कालाविति। आकाशप्रत्याख्यानं वाऽन्यगुणत्वाच्छब्द-

अथ क्रमप्राप्ततया बुद्धेर्मनसश्च परीक्षा सप्तभिः प्रकरणैस्तत्परीक्षैव चाह्निकार्थः। परे तु शरीरावच्छेदव्याप्यभोगानुकूलसम्बन्धवत् प्रमेयपरीक्षा शरीरान्तर्वर्तिप्रमेयपरीक्षैवाह्निकार्थ इति तदसत्, इन्द्रियपरीक्षायामतिव्याप्तेः। तत्र च बुद्धिपरीक्षा पञ्चभिः प्रकरणैः। तत्रादौ * बुद्ध्यनित्यताप्रकरणं तत्र संशयप्रदर्शनाय सूत्रम्—

**कर्माकाशसाधर्म्यात् संशयः ॥ १ ॥**

कर्मण आकाशस्य च साधर्म्यान्निःस्पर्शत्वाद् बुद्धिपदार्थे नित्यत्वसंशयः, बुद्धिपदं नित्यशक्तं न वेति संशयः पर्य्यवसन्नः ॥ १ ॥

तत्र बुद्धिनित्यत्वं सांख्यः साधयति—

**विषयप्रत्यभिज्ञानात् ॥ २ ॥**

बुद्धिर्नित्येति शेषः। योऽहं घटमद्राक्षं, सोऽहं घटं स्पृशामीति प्रत्यभिज्ञानमेकं वृत्तिमन्तं विषयीकरोति। न चात्मा तथा, तस्य जन्यधर्मानधिकरणस्य कूटस्थत्वात्, तस्माद्वृत्तिमती बुद्धिरेव. वृत्तिस्तु तस्याः परिणामः, बुद्धेरप्याविर्भावतिरोभावावेव नतूत्पादविनाशाविति ॥ २ ॥

परिहरति—

**साध्यसमत्वादहेतुः ॥ ३ ॥**

† साध्यसमत्वात्=असिद्धत्वात् प्रतिसन्धातृत्वं न हेतुः, अहं जानामीत्यादिना आत्मन एव प्रतिसन्धातृत्वप्रत्ययात्। अनादिनिधनत्वमेव तस्य कौटस्थ्यम्। अन्यादृशं त्वसिद्धमिति भावः ॥ ३ ॥

---

स्य—यदि शब्दो दिक्कालगुणो भवति, आकाशं तर्हि प्रत्याख्यातम्। न हि शब्दमन्तरेणाकाशास्तित्वे लिङ्गमस्ति यथा दिक्कालयोः परापरादि लिङ्गमिति न द्रव्यान्तरं शिष्यत इति। न च गुणानां श्रोत्रभावो युक्तः। न चाकार्य्याणां सामान्यविशेषसमवायानां सामर्थ्यानुपलब्धेः। न चेदं श्रोत्रं नास्ति शब्दोपलब्धिलिङ्गम्।' ( न्या० वा० )

* सांख्या बुद्धिं नित्यां मन्यन्ते। बुद्धिं नित्यां मत्वा तस्या वृत्तिं ज्ञानमिति आत्मनः=पुरुषस्य च वृत्तिं उपलब्धिरिति च प्रचक्षते।

† यथैव बुद्धेर्नित्यत्वं साध्यं, तथैव बुद्धौ प्रत्यभिज्ञानमपि साध्यम्। किं कारणम्? चेतनधर्म्मस्य करणेऽनुपपत्तेः। पुरुषधर्म्मः

बुद्धेरेव स्थायिन्या यथाविषयं ज्ञानात्मिका वृत्तयो वृत्तिमदभिन्ना वह्नेरिव स्फुलिङ्गा निस्सरन्तीति सांख्यमतं निरस्यति—

* न युगपदग्रहणात् ॥ ४ ॥

वृत्तिवृत्तिमतोरभेदे वृत्तिमदवस्थित्या वृत्तेरप्यवस्थितिर्वाच्या तथा च सर्वपदार्थग्रहणं युगपत् स्यान्न चैवं तस्मान्नाभेद इति ॥४॥

अथ वृत्तीनामनवस्थायित्वमुच्यते तत्राह—

† अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥ ५ ॥

अप्रत्यभिज्ञाने=प्रत्यभिज्ञानस्य अभावे = विनाशे, वृत्तिमतोऽपि विनाशः स्यादतो न द्वयोरैक्यम् ॥ ५ ॥

अयुगपद्ग्रहणं स्वमते व्युत्पादयति—

‡ क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥

मनसोऽणुत्वादिन्द्रियैः सह क्रमेण सम्बन्धात् ज्ञानानां क्रमिकत्व, तथा च 'अविभु चैकं मनः पर्य्यायेण सम्बध्यते" इत्यवतारभाष्यम्। तत्तदिन्द्रियमनःसंयोगे सति ज्ञानमुपपद्यते ॥ ६ ॥

तद्व्यतिरेके ज्ञानाभावं सम्पादयति—

अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥ ७ ॥

अप्रत्यभिज्ञानं तत्तदिन्द्रियजज्ञानाभावः विषयान्तरेण मनसः संबन्धादित्यर्थः ॥ ७ ॥

त्वन्मते चेदं नोपपद्यत इत्याह—

¶ न गत्यभावात् ॥ ८ ॥

त्वन्मते मनसः क्रमेणेन्द्रियसम्बन्धो न, मनसो विभुत्वेन गत्य-

---

खल्वयं ज्ञानं दर्शनमुपलब्धिर्बोधः प्रत्ययोऽध्यवसाय इति:... ...करणचैतन्याभ्युपगमे तु चेतनस्वरूपं वक्तव्यम्। (न्या० भा०)

* वृत्तिवृत्तिमतोऽवस्थानाद् वृत्त्यवस्थानमिति सूत्रार्थः। (न्या० वा० )

† वृत्तीनामपगमे वृत्तिमतोपि अपगमः इति सूत्रार्थः। (न्या० वा०)

‡ वृत्तिवृत्तिमतोर्नानात्वादिति सूत्रार्थः। (न्या० वा० )

¶ प्रामान्यन्तःकरणेन इन्द्रियाणि इति सूत्रार्थः। ( न्या० वा० )

भावात्। परे तु नकारो न सूत्रान्तर्गतः, किं तु 'विभुत्वे चान्तःकरणस्य पर्य्यायेणेन्द्रियैः संयोगो न' इति भाष्यावतरणिकायाम् इत्याहुः ॥ ८ ॥

वृत्तिवृत्तिमतोर्वस्तुतोऽभेदेऽपि भेदप्रत्ययप्रतिपादनाय शङ्कते—

**स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः ॥ ९ ॥**

यथा जपाकुसुमादिसन्निधानादेकस्यापि स्फटिकस्य तत्तद्रूपाभिमानस्तथा वृत्तिमदभिन्नाऽपि वृत्तिस्तत्तद्विषयसन्निकर्षवशान्नानेव प्रतिभासत इति ॥ ९ ॥

दूषयति—

*** न हेत्वभावात् ॥ १० ॥**

भ्रमत्वे साधकाभावान्नोक्तं युक्तमित्यर्थः। केचित्तु 'न हेत्वभावात् इति भाष्यम्' इति टीकादर्शनान्नेदं सूत्रं, किं तु तुच्छतया सूत्रकृताऽदूषणन्यूनतापरिहाराय भाष्यकृता तदुक्तमिति मन्यन्ते ॥ १० ॥

समाप्तं बुद्ध्यनित्यताप्रकरणम् ॥ १ ॥

स्फटिके नानात्वभ्रम इत्यसहमानः सौगतः शङ्कते—

**स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ॥ ११ ॥**

स्फटिकान्यत्वाभिमानवदित्यहेतुः। कुतः? स्फटिकेऽप्यपरापरोत्पत्तेः अत्यन्तविलक्षणस्फटिकोत्पत्तेः। तत्र मानमाह—व्यक्तीनां=भावानां क्षणिकत्वात्। तत्साधनाय भाष्यं †"उपचयापचयप्रबन्धदर्शनाच्छरीरादिषु" ‡ प्रतिक्षणं शरीरेषूपचयाऽपचयदर्शनान्नानात्वं, नह्येकस्मिन्नवयविनि परिमाणद्वयसमावेश इति भावः। इदं सूत्रमेवेति केचित् ॥ ११ ॥

---

*'न हेत्वभावादिति भाष्यं व्याचष्टे' इति तात्पर्य्यटीकावचनात् न्यायसूचीनिबन्धेऽप्यस्यानुपलम्भात् वृत्तिकृद्ग्रन्थस्थमतान्तरसंवादाच्चेदं सूत्रम्।

† उपचयः=वृद्धिः। अपचयः=ह्रासः।

‡ क्षणिकत्वसाधनम्—"प्रतिक्षणं शरीरं अन्यच्चान्यच्च भवति; बाह्य-

सिद्धान्तसूत्रम्—

**नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा ॥ १२ ॥**

पदार्थानां विनाशसामग्रीवैशिष्ट्यनियमे मानाभावात् अभ्युपेत्याह—यथादर्शनमिति। यदि कस्यचिद्विनाशसामग्रीवैशिष्ट्ये प्रमाणं स्यात्, तदा क्षणिकत्वं तस्याभ्यनुज्ञायत एव, यथाऽन्त्यशब्द इति॥१२॥

युक्त्यन्तरमाह—

*** नोत्पत्तिविनाशकारणोपलब्धेः ॥ १३ ॥**

न स्फटिकादेः क्षणिकत्वं यत उत्पत्तिविनाशकारणान्युपलभ्या निर्णीतान्यवयवोपचयादीनि, न च स्फटिके विनाशकारणमुपलभ्यते येन पूर्वविनाशोऽपरोत्पत्तिश्च स्यादिति भावः ॥ १३ ॥

आक्षिपति—

**क्षीरविनाशकारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुपपत्तिः॥१४॥**

दध्युत्पत्तिवद्दध्युत्पत्तिकारणानुपलब्धिवत् तदुपपत्तिः पूर्वस्फटिकविनाशकारणानुपलब्ध्युत्तरस्फटिकोत्पत्तिकारणानुपलब्ध्योश्चोपपत्तिः स्यादिति भावः ॥ १४ ॥

सिद्धान्तसूत्रम्—

**लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ १५ ॥**

दध्नः क्षीरविनाशस्य च प्रत्यक्षसिद्धत्वात् तत्कारणं कल्प्यते, न त्वेवं स्फटिकविनाशोत्पादावुपलभ्येते येन तत्कारणकल्पनम् ॥ १५ ॥

सौगतमते सांख्यदूषणमुपन्यस्यति—

**न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ १६ ॥**

न क्षीरस्य नाशो दध्नश्चोत्पत्तिः, किं तु क्षीरस्य परिणामः। परिणामशब्दार्थो गुणान्तरप्रादुर्भावः। विद्यमानस्य क्षीरस्य पूर्वरसतिरोभावो अम्लरसात्मकगुणान्तरस्याविर्भावादित्यर्थः ॥ १६ ॥

---

प्रत्ययाभेदे सत्यन्ते विशेषदर्शनात् पच्यमानभूमिपाकवत्। अपच्यमानभूमिपाकवच्चेति।" (न्या० वा०)

* उपचयापचयोत्पत्तिविनाशकारणोपलब्धेरिति सूत्रार्थः।

एतन्निराकरोति सूत्रकारः—

**व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्ते-रनुमानम् ॥ १७ ॥**

व्यूहान्तराद्=रचनान्तराद् * [ द्रव्यान्तरोत्पत्तिर्दृश्यते, तदेव च पूर्वद्रव्यनिवृत्त्यनुमितिं जनयति मूर्ततया समानदेशताविरोधादेकदा द्रव्यद्वयासमावेशात् न ] पूर्वावयवसंयोगनाशो द्रव्यान्तरोत्पादश्चानुभविक इति भावः ॥ १७ ॥

दोषान्तराभिधानाय सिद्धान्तिनः सूत्रम्—

**क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चो-पलब्धेरनेकान्तः ॥ १८ ॥**

क्षीरदधिदृष्टान्तेन विनाशोत्पादावकारणकावेवेति न युक्तं घटादौ सकारणकत्वोपलब्धेर्व्यभिचारात्। वस्तुतः क्षीरविनाशेऽम्लद्रव्यसंयोगस्य हेतुत्वादम्लरसवत्परमाणुभिश्च दध्न आरम्भान्नाकारणकौ क्षीरविनाशदध्युत्पादाविति ॥ १८ ॥

समाप्तं क्षणभङ्गप्रकरणम् ॥ २ ॥

---

बुद्धेरात्मगुणत्वं यद्यप्यात्मपरीक्षात एव सिद्धप्रायं, तथाऽपि विशिष्य व्युत्पादनाय बुद्ध्यात्मगुणत्वप्रकरणम्। तत्र चेन्द्रियार्थसन्निकर्षाधीनत्वादिन्द्रियादिनिष्ठत्वमेवास्तु, भेर्याकाशसंयोगाधीनशब्दस्याकाशनिष्ठत्ववदिति पूर्वपक्षे सिद्धान्तसूत्रम्—

**नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥ १९ ॥**

बुद्धिर्नेन्द्रियस्य न वाऽर्थस्य गुणस्तन्नाशेऽपि ज्ञानस्य=स्मरणस्य अवस्थानात्=उत्पत्तेः। नह्यनुभवितुरभावे स्मरणमुपपद्यतेऽतिप्रसङ्गादिति भावः † ॥ १९ ॥

* [ ] एतच्चिह्नान्तर्गतः पाठो न सार्वत्रिकः।

† अन्यत्खलु वै तदिन्द्रियार्थसन्निकर्षजं ज्ञानं यदिन्द्रियविनाशे न भवति, इदमन्यदात्ममनःसन्निकर्षजं तस्य युक्तो भाव इति। स्मृतिः

मनोगुणत्वं निरस्यति—

**युगपज्ज्ञेयानुपलब्धेश्च * न मनसः ॥ २० ॥**

युगपत् ज्ञेयानुपलब्धेर्हेतोः सिद्धस्य मनसो न कर्तृत्वं धर्मिग्राहकमानेन करणत्वेनैव सिद्धेः। वस्तुतो युगपज्ज्ञेयानुपलब्धेरित्यनेन मनसोऽणुत्वं सूचितम्। तथा च तद्गतसुखाद्यप्रत्यक्षता स्यात् एवं कायव्यूहे तत्तद्देहावच्छेदेन ज्ञानादिकं न स्यादिति ॥ २० ॥

शङ्कते—

**तदात्मगुणत्वेऽपि तुल्यम् ॥ २१ ॥**

तस्या बुद्धेरात्मगुणत्वेऽपि ज्ञानयौगपद्यं तुल्यम् आत्मनः सर्वेन्द्रियसंयोगात्. तथा च स दोषस्तदवस्थ एवेति कथं तया युक्त्या मनःसिद्धिरिति भावः ॥ २१ ॥

उत्तरयति—

**इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः ॥ २२ ॥**

युगपज्ज्ञानेन्द्रियैः सह मनसः सन्निकर्षाभावाश्च युगपन्नानाविषयोपलब्धिरिति भावः ॥ २२ ॥

आक्षिपति—

**† नोत्पत्तिकारणानपदेशात् ॥ २३ ॥**

---

खल्वियमद्राक्षमिति पूर्वदृष्टविषया न च विज्ञातरि नष्टे पूर्वोपलब्धेः स्मरणं युक्तं, न चान्यदृष्टमन्यः स्मरति ॥ (भाष्यम्)

* "युगपज्ज्ञेयानुपलब्धेश्च" अयोगिन इति वा चार्थः। योगी खलु ऋद्धौ प्रादुर्भूतायां विकारधर्म्मा निर्माय सेन्द्रियाणि शरीरान्तराणि तेषु युगपज्ज्ञेयानुपलभते। तच्चैतद्विभौ ज्ञातर्युपपद्यते नाणौ मनसीति। विभुत्वे वा मनसो ज्ञानस्य नात्मगुणत्वप्रतिषेधः। विभु च मनः, तदन्तःकरणभूतमिति तस्य सर्वेन्द्रियैर्युगपत् संयोगाद्युगपज्ज्ञानान्युत्पद्येरन्निति ॥ (भा०)

† अस्मादेवोत्पद्यतामिति न कारणमपदिश्यते इति सूत्रार्थः। आत्मेन्द्रियार्थसंनिकर्षात् ज्ञानमुत्पद्यते इति। अयुगपदुत्पत्तौ न कारणान्तरमपदिश्यते इति। विदेहप्रत्ययानुत्पत्तौ वा = यदा इन्द्रियमर्थेन बहिरवस्थितेन सम्बद्ध्यते, आत्मसंबन्धोऽपि तत्रास्तीति कस्माद्

बुद्ध्युत्पत्तौ कारणस्यानपदेशात्=अकथनात् नात्मगुणो बुद्धिः, आत्ममनःसंयोगस्य कारणत्वे ज्ञानस्य सार्वदिकत्वप्रसङ्ग इति भावः ॥ २३ ॥

बुद्धेरात्मगुणत्वे दोषमप्याह—

**विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ २४ ॥**

बुद्धेरात्मन्यवस्थाने विनाशकारणस्य=आश्रयनाशादेरनुपलब्धेस्तस्या बुद्धेर्नित्यत्वप्रसङ्गः * ॥ २४ ॥

उत्तरयति—

**अनित्यत्वग्रहणाद् बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥ २५ ॥**

बुद्धेरनित्यत्वस्य ग्रहणाद् उत्पादनाशयोरानुभविकत्वात् तत्कारणे कल्पनीये, आत्ममनोयोगादेरुत्पादकत्वमनन्तरोत्पन्नबुद्धेः संस्कारादेर्वा नाशकत्वं कल्प्यते चरमबुद्धेस्तु अदृष्टनाशात् कालाद्वा नाशः। बुद्धेर्बुद्ध्यन्तरनाश्यत्वेऽनुरूपं दृष्टान्तमाह—शब्दवदिति। शब्दस्य यथा शब्दान्तरान्नाशश्चरमशब्दस्य निमित्तनाशनाश्यत्वं, तथा प्रकृतेऽपीति भावः ॥ २५ ॥

ननु बुद्धेरात्मगुणत्वे संस्कारात्ममनोयोगयोः सत्त्वात् स्मृतीनां यौगपद्यं स्यादत्रैकदेशिनः परिहारमाशङ्कते—

**ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ २६ ॥**

---

विदेहप्रत्ययो न भवतीति वक्तव्यम्। अन्तःकरणप्रत्याख्याने च केवलमात्मा स्मृत्यादिकारणमिति कस्मान्न युगपदुत्पत्तिः स्मृतीनाम्। यदा च इन्द्रियमात्मा च अर्थेन युगपत्सम्बद्धौ, तदा किमिन्द्रियार्थसंनिकर्षः कारणम् उत आत्मार्थसन्निकर्षः, उत आत्मेन्द्रियार्थसंनिकर्षः इति कारणानपदेशः ॥ ( न्या० वा० )

* द्विविधो गुणनाशहेतुः गुणानाम् आश्रयाभावो विरोधी च गुणः। तत्र नित्यत्वादात्मनोऽनुपपन्नः पूर्वः, विरोधी च बुद्धेर्गुणो न गृह्यते, तस्मात् आत्मगुणत्वे सति बुद्धेर्नित्यत्वप्रसङ्गः ॥ ( भा० )

ज्ञानं संस्कारकारणं समवेतं यदवच्छेदेन, तदवच्छेदेन मनःसन्निकर्षस्य स्मृत्युत्पादकत्वात्तस्य च क्रमिकत्वान्न स्मृतियौगपद्यमित्यर्थः। ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानपदं संस्कारपरमित्यन्ये ॥२६॥

तन्मतं दूषयति—

**नान्तःशरीरवृत्तित्वान्मनसः ॥ २७ ॥**

उक्तं न युक्तं मनसः अन्तःशरीरवृत्तित्वात्। अन्तःशरीरे वृत्तिर्ज्ञानजनकीभूतो व्यापारो यस्य तत्त्वात्। शरीरातिरिक्तावच्छेदेनात्ममनोयोगस्य ज्ञानाहेतुत्वाच्छरीरावच्छिन्नस्य हेतुत्वे तद्दोषतादवस्थ्यमिति भावः ॥ २७ ॥

एकदेशी शङ्कते—

*** साध्यत्वादहेतुः ॥ २८ ॥**

शरीरावच्छिन्नात्ममनोयोगो न हेतुः साध्यत्वात् = असिद्धत्वात्। मानाभावादिति भावः ॥ २८ ॥

सिद्धान्तसूत्रम्—

**स्मरतः शरीरधारणोपपत्तेरप्रतिषेध † ॥ २९ ॥**

उक्तप्रतिषेधो न युक्तः स्मरणतः शरीरधारणरूपाया उपपत्तेर्युक्तेः, अन्यथा मनसो बहिर्भावे शरीरावच्छिन्नात्ममनोयोगाभावेन प्रयत्नाभावे शरीरधारणं न स्यादिति भावः ॥ २९ ॥

पुनः शङ्कते—

**‡ न तदाशुगतित्वान्मनसः ॥ ३० ॥**

शरीराधारणं न मनस आशुगतित्वाच्छीघ्रमेव शरीरे परावृत्तेः॥३०॥

दूषयति—

**+ स्मरणकालानियमात् ॥ ३१ ॥**

* अशरीरं मनः पुरुषार्थासमर्थमिति साध्यमेतत्। (न्या० वा०)

† स्मरतः शरीरधारणोपपत्तेर्न प्रतिषेधः। स्मरणशरीरधारणे युगपद्भवत इति दृष्टं, दृष्टं च सर्वैः प्रतिपत्तव्यम्। चिरनिश्चरिते च मनसि स्मरतः शरीरधारणं न स्यात्॥ (न्या वा०)

‡ उभयं सिध्यति स्मरणं धारणं चेति। (न्या० वा०)

\+ शरीरसंयोगानपेक्षश्चात्ममनःसंयोगो न स्मृतिहेतुः, शरी-

मनसः शीघ्रमागमनं न युक्तं स्मरणे कालनियमाभावात्। कदाचिच्छीघ्रं स्मर्यते, कदाचित् प्रणिधानाद्विलम्बेनापीति। न च प्रणिधानं शरीरान्तःस्थितमनस एव, वहिर्निर्गमस्तु स्मरणाव्यवहितपूर्वमेवेति वाच्यं, वहिर्निर्गमान्तःप्रवेशानुकूलक्रियाविभागादिकालकलापं यावच्छरीरधारणं न स्यादिति भावः ॥ ३१ ॥

एकदेशिमतमन्य एकदेशी दूषयति—

आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः ॥ ३२ ॥

बहिः प्रदेशविशेषे मनःसंयोगविशेषो न संभवति। स हि न स्मृत्यर्थमात्मप्रेरणेन, तस्य स्मरणीयज्ञानपूर्वकतया प्रागेव स्मरणाऽऽपत्तेः; नापि यदृच्छया=अकस्मात्, आकस्मिकत्वस्य निषेधात्; नापि मनसो ज्ञतया=ज्ञातृतया; मनसो ज्ञातृत्वानभ्युपगमात् *। प्रेरणयदृच्छाज्ञताभिः प्रयत्नेच्छाज्ञानैरित्यर्थ इति कश्चित्, तन्न, प्रयत्नेनैव चरितार्थत्वापत्तेः ॥ ३२ ॥

एतन्निराकरोति—

व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानः ॥ ३३ ॥

नृत्यादिकं पश्यतः कण्टकादिना पादव्यथनेन मनःसंयोगो यथा जायते, तथैव तदपि इति भावः। इतरथा तत्र मनःसंयोगे-

---

रस्य भोगायतनत्वात्। उपभोगायतनं पुरुषस्य=ज्ञातुः शरीरं, न ततो निश्चरितस्य मनस आत्मसंयोगमात्रं ज्ञानसुखादीनामुत्पत्तौ कल्पते, क्लृप्तौ वा शरीरवैयर्थ्यमिति ॥ ( भा० )। अनियतः स्मृतिकालोऽतोऽयुक्तमेतत्। शरीरसंयोगानपेक्षं चात्ममनःसंयोगं स्मृतिकारणं ब्रुवतः शरीरस्य भोगायतनत्वं निवर्त्तते। ततस्तन्निवृत्तौ शरीरोत्पत्तिवैयर्थ्यमिति ॥ ( न्या० वा० )

* कथम्? स्मर्त्तव्यत्वादिच्छातः स्मरणज्ञानासम्भवाच्च। यदि तावदात्मा 'अमुष्यार्थस्य स्मृतिहेतुः संस्कारः अमुष्मिन्नात्मप्रदेशे समवेतस्तेन मनः संयुज्यता'मिति मनः प्रेरयति। तदा स्मृत एवासौ अर्थो भवति न स्मर्त्तव्यः। न चात्मप्रत्यक्ष आत्मप्रदेशः संस्कारो वा तत्रानुपपन्नात्मप्रत्यक्षे संवित्तिरिति। सुस्मूर्षया चायं मनः प्रणिदधानः चिराद्यत्किंचिदर्थं स्मरति न अकस्मात्। इत्थं च मनसो नास्ति ज्ञानप्रतिषेधादिति ॥ ( भा० )

प्युक्तदोषाः स्युः । अदृष्टविशेषाधीनकर्मवशादसाविति चेत्, तुल्यं प्रकृतेऽपीति भावः ॥ ३३ ॥

स्मरणायौगपद्यं स्वयमुपपादयति—

प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावादयुगपदस्मरणम्॥ ३४ ॥

प्रणिधानं = चित्तैकाग्र्यं, सुस्मूर्षेति यावत् । लिङ्गज्ञानम् = उद्बोधकम् । उद्बोधकानामानन्त्यादादिपदं ज्ञानात्परतो योजनीयं, तस्य क्रमात् स्मरणक्रमः । यदि च युगपदुद्बोधकानि, तदा तावद्विषयकस्मरणमिष्यत एव, यथा पदज्ञानादाविति मन्तव्यम् ॥ ३४ ॥ *

---

* ३४ सूत्रानन्तरं भाष्यवार्त्तिकयो "प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्गः", इति सूत्रमस्ति । तस्य व्याख्या तु— 'यत्खल्विदं प्रातिभमिव ज्ञानं प्रणिधानाद्यनपेक्षं स्मार्त्तमुत्पद्यते कदाचित्तस्य युगपदुत्पत्तिप्रसङ्गो हेत्वभावात्, सतः स्मृतिहेतोरसंवेदनात् प्रातिभेन समाभिमानः बह्वर्थविषये वै चिन्ताप्रबन्धे कश्चिदेवार्थः कस्यचित्स्मृतिहेतुः, तस्यानुचिन्तनात् तस्य स्मृतिर्भवति, न चायं स्मर्त्ता सर्वस्मृतिहेतुं संवेदयते, एवं मे स्मृतिरुत्पन्नेत्यसंवेदनात् प्रातिभमिव ज्ञानमिदं स्मार्त्तमित्यभिमन्यते न त्वस्ति प्रणिधानाद्यनपेक्षं स्मार्त्तमिति । प्रातिभे कथमिति चेत्, पुरुषकर्मविशेषादुपभोगवन्नियमः=प्रातिभमिदानीं ज्ञानं युगपत् कस्मान्नोत्पद्यते, यथा भोगार्थं कर्म युगपदुपभोगं न करोति, एवं पुरुषकर्मविशेषः प्रतिभाहेतुर्न युगपदनेकं प्रातिभं ज्ञानमुत्पादयति । हेत्वभावादयुक्तमिति चेत् न, करणस्य प्रत्ययपर्याये सामर्थ्यात् उपभोगवन्नियम इत्यस्ति दृष्टान्तो हेतुर्नास्तीति चेन्मन्यसे, न करणस्य प्रत्ययपर्याये सामर्थ्याद्, नैकस्मिन् ज्ञेये युगपदनेकं ज्ञानमुत्पद्यते । न चानेकस्मिँस्तदिदं दृष्टेन प्रत्ययपर्यायेणानुमेयं करणसामर्थ्यमित्थंभूतमिति न ज्ञातुर्विकरणधर्म्मणो, देहनानात्वे प्रत्ययायौगपद्यादिति । अयं च द्वितीयः प्रतिषेधः—व्यवस्थितशरीरस्य चानेकज्ञानसमवायादेकप्रदेशे युगपदनेकार्थस्मरणं स्यात् क्वचिदेवावस्थितशरीरस्य ज्ञातुरिन्द्रियार्थप्रबाधेन न ज्ञानमनेकमेकस्मिन्नात्मप्रदेशे समवैति । तेन यदा मनः संयुज्यते तदा ज्ञानपूर्वस्यानेकस्य युगपत्स्मरणं प्रसज्यते,

नन्विच्छादीनां मनोधर्मत्वात् तेषां ज्ञानजन्यत्वात् सामानाधिकरण्येन च तत्र कार्यकारणभावात् कथं ज्ञानस्यात्मगुणत्वमित्याशङ्कायां सिद्धान्तसूत्रम्—

* ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः † ॥ ३५ ॥

ज्ञस्य=ज्ञानवतः=आत्मन इच्छादयः। हेतुमाह—आरम्भनिवृत्त्योरिच्छाद्वेषनिमित्तत्वादिति, प्रवृत्तिनिवृत्त्योरिच्छाद्वेषजन्यत्वात्। तत्र च सामानाधिकरण्येन ज्ञानस्य हेतुत्वमिति भावः। यद्वा ज्ञस्य=ज्ञानवतो याविच्छाद्वेषौ तन्निमित्तत्वादित्यर्थः। तथा च ज्ञानेच्छाप्रयत्नानां सामानाधिकरण्यं नासिद्धम् ॥ ३५ ॥

---

प्रदेशसंयोगपर्यायाभावादिति। आत्मप्रदेशानामद्रव्यान्तरत्वादेकार्थसमवायस्याविशेषे स्मृतियौगपद्यप्रतिषेधानुपपत्तिः। शब्दसन्ताने तु श्रोत्राधिष्ठानप्रत्यासत्त्या शब्दश्रवणवत्संस्कारप्रत्यासत्त्या मनसः स्मृत्युत्पत्तेः न युगपदुत्पत्तिप्रसङ्गः। पूर्व एव तु प्रतिषेधो नानेकज्ञानसमवायादेकप्रदेशे युगपत्स्मृतिप्रसंग इति।' (भा०) एतद्भाष्यस्थ प्रत्यासत्तिशब्दं व्याचिख्यासुर्वार्त्तिककृदाह—"का प्रत्यासत्तिः? नहि संस्काराणां संनिकृष्टविप्रकृष्टभावोऽस्ति समानदेशत्वात्। न ब्रूमः संनिकृष्टता प्रत्यासत्तिः, अपि तु संस्कारस्य सहकारिकारणसमवधानं प्रत्यासत्तिः। यथा शब्दाः सन्तानवर्त्तिनः सर्वत्रैवाकाशे समवयन्ति समानदेशत्वेपि यस्योपलब्धेः कारणानि सन्ति स उपलभ्यते नेतरे, तथा संस्कारेष्वपीति॥"

* ज्ञातुरेव इच्छादयः इतिसूत्रार्थः। यदि अन्तःकरणस्येच्छादयः स्युः, न प्रत्यक्षाः स्युः—नहि इच्छादयोऽन्यत्र वर्त्तमाना अन्यस्य प्रत्यक्षा भवितुमर्हन्ति। नित्यं चेच्छादयोऽप्रत्यक्षाः स्युः मनोगुणानामतीन्द्रियत्वात्। आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानम्। (न्या० वा०) "प्रतिवृत्त्या अञ्चतीतीति प्रत्यगात्मा तस्मिन्। एतदुक्तं भवति। ज्ञानसामानाधिकरण्येनोपलब्धेरन्यदीयानामिच्छादीनामन्यस्याप्रत्यक्षीकरणात्। तत्करणे वा मैत्रगतानामपि चैत्रग्रहणप्रसङ्गात्। अन्तःकरणवृत्तीनां गुणान्तराणां नित्याप्रत्यक्षत्वात् आत्माश्रिता एव इच्छादयो न अन्तःकरणाश्रया इति। (ता० टी०)

† प्राप्तुमिच्छाप्रयुक्तस्य सुखसाधनावाप्तये साधनविशेष आरम्भः। जिहासाप्रयुक्तस्य दुःखसाधनपरिवर्जनं निवृत्तिः। (भा०)

नन्वस्तु तेषां सामानाधिकरण्यम्, परंतु तेषामधिकरणं कायाकारः पार्थिवादिपरमाणुपुञ्ज एवेति चार्वाकः शङ्कते—

* **तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥ ३६ ॥**

पार्थिवाद्येषु देहेषु ज्ञानादेर्न प्रतिषेधः। कुतः? इच्छाद्वेषयोस्त-ल्लिङ्गत्वाद्=आरम्भनिवृत्तिलिङ्गकत्वात् तयोः चेष्टाविशेषलिङ्गकत्वा-च्चेष्टायाश्च शरीरे प्रत्यक्षसिद्धत्वादिति भावः ॥ ३६ ॥

समाधित्सुः प्रतिबन्दिमाह—

† **परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३७ ॥**

आरम्भनिवृत्त्यनुमापकक्रियाविशेषदर्शनात् परश्वादिषु ज्ञाना-दिसिद्धिप्रसङ्गः। तस्मात् क्रियाविशेषाणां प्रयत्नादिजन्यत्वं सम्ब-न्धान्तरेण, न तु समवायेन व्यभिचारादिति भावः ‡॥ ३७ ॥

स्वमते व्युत्पादयति—

¶ **नियमानियमौ तु तद्विशेषकौ ॥ ३८ ॥**

* प्रवृत्तिनिवृत्तिभ्यां सामानाधिकरण्यात् शरीरादिष्वप्रसङ्ग इति सूत्रार्थः। ( न्या० वा० )

† अनेकान्तो वाक्यार्थः। ( न्या० वा० )

‡ अयं तर्हि अन्योऽर्थः=तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवादिष्व-प्रतिषेधः; पृथिव्यादीनां भूतानामारम्भस्तावत्त्रसविशरारुस्थावर-शरीरेषु तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषः, लोष्टादिषु लिङ्गाभावात् प्रवृत्तिविशेषाभावो निवृत्तिः, आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति पार्थिवाद्येष्वणुषु तद्दर्शनात् इच्छाद्वेषयोस्तद्योगात् ज्ञानयोग इति सिद्धं भूतचैतन्यम् ॥ (भा०) अत्र भाष्ये तात्पर्यटीकायां च 'कुम्भा दिष्वनुपलब्धेरहेतुः', इत्येकं सूत्रमुपलभ्यते, तस्य भाष्यं—'कुम्भा-दिमृदवयवानां व्यूहलिङ्गः प्रवृत्तिविशेष आरम्भः, सिकतादिषु प्रवृत्तिविशेषाभावो निवृत्तिः। न च मृत्सिकतानामारम्भनिवृत्ति-दर्शनादिच्छाद्वेषप्रयत्नज्ञानैर्योगः, तस्मात् तल्लिङ्गत्वादिच्छाद्वेषयोरि-त्यहेतुरिति'। ( भा० )।

¶ प्रयुज्यमानभूतविषयत्वं प्रवृत्तिनिवृत्त्योर्नियमः=भूतानि प्रयु-ज्यन्ते, तेषु प्रवृत्तिनिवृत्ती भवतः। सर्वेष्विति- यदि पुनर्ज्ञत्वाद् भूतानां प्रवृत्तिनिवृत्ती स्याताम् भूतमात्रे स्याताम्-यथा गुरुत्वादिभ्यःपत-

तद्विशेषकौ=तयोश्चेतनाचेतनयोर्विशेषकौ=इतरव्यावर्त्तकौ नियमानियमौ, समवायेन जन्यतानियमतदभावौ, समवायेन ज्ञानेच्छादीनां चेतनधर्मत्वाद् अवच्छेदकतया च शरीरे तेषां जन्यजनकभावः परश्वादौ यत्नविषयतया क्रिया। वस्तुतस्तु चेष्टैव परश्वादिक्रियाजनिका यत्नादेः तद्धेतुत्वे मानाभावः॥ ३८॥

इच्छादीनां मनोगुणत्वाभावे युक्त्यन्तरमाह—

**यथोक्तहेतुत्वात् पारतन्त्र्यात् स्वकृताभ्यागमाच्च न मनसः॥ ३९॥**

इच्छादय इति शेषः। यथोक्तहेतुत्वात् ज्ञानेच्छादीनां सामानाधिकरण्येन कार्य्यकारणभावात्, पारतन्त्र्यात् मनसश्चेतनसहकारित्वादिच्छादयो न तद्गुणाः। वयं तु इच्छादीनां पारतन्त्र्यात्=पराधीनविषयताशालित्वात्। इच्छादीनां हि समानाधिकरणस्वजनकज्ञानविषयतैव, विषयताज्ञानवैयधिकरण्ये च तन्न स्यादिति भावः। स्वकृतात्=स्वयंकृतात् कर्मणः, अभ्यागमो=भोगः, स मनसो यत्नादिमत्त्वे न स्यात्। नह्यन्यकृतात् कर्मणो भोगः। न च भोगोऽपि मनसः भोक्तुर्बन्धमोक्षादिभागिन एवात्मत्वात्, तद्भिन्न आत्मनि मानाभावात्। आत्मनः सुखादिसाक्षात्कारानुरोधात् महत्त्वं, मनसश्च धर्मिग्राहकमानादणुत्वम्, अतोऽपि नैक्यं। न च मनसः परमाणु-

---

नम्। यानि गुरुत्वादिमन्ति भूतानि तानि स्वगुणात्पतन्तीति नियमश्च दृष्टः, तस्मान्न भूतानि चेतनानि इति। एकशरीरे च ज्ञातृबहुत्वं निरनुमानमिति=यस्य भूतानि चेतनानि, तस्यैकशरीरे बहूनि चेतनानि इति बहवश्चेतनाः स्युः। भवन्तु बहवश्चेतनाः किन्नो बाध्यते इति चेत्, न, बहुत्वे प्रत्ययव्यवस्थानानुमानं न भवेत्। अव्यवस्थानं तु पश्यामः प्रत्ययानां प्रतिसन्धानात्—सर्वः प्रत्ययः प्रतिसन्धीयमानः एकस्मिन् कार्यकारणसङ्घाते दृष्ट इति। अन्यथाभिधानाच्च=हिताहितप्राप्तिपरिहारार्थः परिस्पन्दः प्रवृत्तिनिवृत्ती, भवता तु क्रियामात्रं क्रियोपरमञ्चाश्रित्य तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः इत्युक्तम्। यथाविधे च प्रवृत्तिनिवृत्ती प्रयुज्यमानभूताधारः, तेन तथाभूते भूतमात्रे भवतः इति भूतेन्द्रियमनसां समानः प्रतिषेधः मनस्तूदाहरणमात्रम्। (न्या० वा०)

त्वाज्ञाधनाञ्च नित्यत्वं त्वन्मते, तथा चात्ममनसोर्नित्यत्वात् सदा ज्ञानादिप्रसङ्गादनिर्मोक्षः स्यादतोऽन्तःकरणस्यानित्यत्वं तन्नाशश्च मोक्ष इति वाच्यम्, अदृष्टाद्यभावेन नित्ययोरपि वन्ध्ययोरिव फलाजनकत्वात्। न च ज्ञानादिकं प्रक्रम्य इत्येतत् सर्वं मन एवेति श्रुतेर्मनस एव ज्ञानादिकम्, अभेदमुखेनोपादानोपादेयमात्रकथनादिति वाच्यम्, अन्नं वै प्राणा इत्यादौ निमित्तेऽपि अभेदोल्लेखदर्शनात्, कारणत्वमात्रे तात्पर्यादिति तत्त्वम् ॥ ३९ ॥

आत्मगुणत्वमुपसंहरति—

*** परिशेषाद्यथोक्तहेतूपपत्तेश्च † ॥ ४० ॥**

इच्छादिकं नात्मगुण इत्यादि । हेतुमाह—परिशेषात्। शरीरादिहेतुनिरासात् यथोक्तहेतूनां दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्यादीनाम् उपपत्तेः=उपपन्नत्वात् ॥ ४० ॥

स्मृतेरात्मगुणत्वमर्थसिद्धमपि शिष्यबुद्धिवैशद्याय पृथग् व्युत्पादयति—

**स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ॥ ४१ ॥**

---

* परिशेषो नाम=प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः ॥ (भा०)

† परिशेषज्ञापनार्थं प्रकृतस्थापनादिज्ञानार्थं च यथोक्तहेतूपपत्तिवचनमिति। अथवा उपपत्तेश्चेति हेत्वन्तरमेवेदम्। नित्यः खल्वयमात्मा यस्मादेकस्मिन् शरीरे धर्मं चरित्वा कायभेदात् स्वर्गे देवेषूपपद्यते, अधर्मं चरित्वा देहभेदात् नरकेषूपपद्यते इति। उपपत्तिः शरीरान्तरप्राप्तिलक्षणा, सा सति सत्त्वे नित्ये चाश्रयवती। बुद्धिप्रबन्धमात्रे तु निरात्मके निराश्रया नोपपद्यते इति। एक सत्त्वाधिष्ठानश्चानेकशरीरयोगः संसार उपपद्यते, बुद्धिसन्तानमात्रे तु एकसत्त्वानुपपत्तेर्न कश्चिद्दीर्घमध्वानं संधावति, न कश्चिच्छरीरप्रबन्धाद्विमुच्यते इति संसारापवर्गानुपपत्तिरिति । बुद्धिसंतानमात्रे च सत्त्वभेदात् सर्वमिदं प्राणिव्यवहारजातमप्रतिसंहतमव्यावृत्तमपरिनिष्ठितं च स्यात्। ततः स्मरणाभावान्नान्यदृष्टमन्यः स्मरति। स्मरणं च खलु पूर्वज्ञातस्य समानेन ज्ञात्रा ग्रहणम्, अज्ञासिषममुमर्थं ज्ञेयमिति। सोयमेको ज्ञाता पूर्वज्ञातमर्थं गृह्णाति, तच्चास्य ग्रहणं स्मरणमिति, तद् बुद्धिप्रबन्धमात्रे निरात्मके नोपपद्यते। (भा०)

* तुरप्यर्थं, † ज्ञस्वाभाव्यात्=ज्ञानवत्स्वाभाव्यात्, ज्ञानत्वावच्छिन्नवत्त्वं ह्यात्मनः स्वभावः, स्मृतेश्च ज्ञानत्वावच्छिन्नत्वात्तद्वत्त्वमर्थात् सिद्धं, यद्वा ज्ञस्वाभाव्यात्—स्मृतिहेतुज्ञानस्यात्मवृत्तित्वे सिद्धे स्मृतेरात्मवृत्तित्वमपि सिद्धम । परे तु ज्ञानस्याशुविनाशित्वात् कथं स्मृतिहेतुत्वमत आह—स्मरणमित्यादि ज्ञानवतः स्वभावः= संस्कारः तस्मादित्यर्थः, इत्याहुः ॥ ४१ ॥

स्मृतियौगपद्यसमाधानाय प्रणिधानादीनामुद्बोधकानां क्रमो हेतुरुक्तस्तत्र प्रणिधानादीनि दर्शयति—

**प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः॥ ४२ ॥**

स्मरणमित्यनुवर्त्तते। निमित्तशब्दस्य द्वन्द्वात् परं श्रुतस्य प्रत्येकमभेदेनान्वयः। प्रणिधानं मनसो विषयान्तरसंचारवारणम् १। निबन्ध=एकग्रन्थोपनिबन्धनं, यथा प्रमाणेन प्रमेयादिस्मरणम् २। अभ्यासः = संस्कारबाहुल्यम्, एतस्य यद्यपि नोद्बोधकत्वं, तथापि तादृशे शीघ्रमुद्बोधकसमवधानं स्यादित्याशयेन तदुपन्यासः, अभ्यासो दृढतरसंस्कार उद्बोधकत्वेनोक्त इति केचित् ३। लिङ्गं = व्याप्यम्, व्यापकस्य स्मारकं ४। लक्षणं यथा कपिध्वजादि अर्जुनादेः ५। सादृश्यं, देहादेः ६। परिग्रहः=स्वीकारस्तस्य स्वस्वामिभावोऽर्थः, तदेकतरेण तदन्यतरस्मरणम् ७। आश्रयाश्रितौ=राजादितत्परिजनौ परस्परस्मारकौ ८। सम्बन्धः=गुरुशिष्यभावादिः, गोवृषन्यायात् पृथगुक्तः ९। आनन्तर्य्यं=प्रोक्षणाववातादेः १०। वियोगो यथा दारादेः ११। एककार्य्याः=अन्तेवासिप्रभृतयः परस्परस्मारकाः १२। विरोधादहिनकुलादेरन्यतरेणापरस्मरणम् १३। अतिशयः=संस्कार उपनयनादिराचार्यादिस्मारकः १४। प्राप्तिर्धनादेर्दातारं स्मारयति १५। व्यवधानम्=आवरणम् यथा खड्गादेः कोशादिः १६। सुखदुःख-

---

* भाष्यमते 'तु, शब्दोऽवधारणार्थः ॥

† त्रिकालव्यापिनी ज्ञानशक्तिरेव ज्ञस्वाभाव्यं, तद् हि आकाशादिभ्यो व्यावृत्तं त्रिकालव्यापिस्वरूपमेवात्मनः ॥ ( ता० टी० )

योरन्यतरेणापरस्य, ताभ्यां तत्प्रयोजकस्य वा स्मरणम् १७–१८। इच्छाद्वेषौ यद्विषयतया गृहीतौ तस्य स्मारकौ १९–२०। भयं मरणादेर्भयहेतोर्वा स्मारकम् २१। अर्थित्वं दातुः २२। शाखादेः क्रिया वाय्वादेः २३। रागात् = प्रीतेः पुत्रादेः स्मरणम् २४। धर्माधर्माभ्यां जन्मान्तरानुभूतसुखदुःखसाधनयोः प्रागनुभूतसुखादेश्च स्मरणमिति २६। उक्तेषु च किंचित्स्वरूपसत्, किंचिच्च ज्ञातमुद्बोधकं, शिष्यव्युत्पादनाय चायं प्रपञ्चः ॥ ४२ ॥

समाप्तं बुद्ध्यात्मगुणत्वप्रकरणम् ॥ ३ ॥

बुद्धेर्बुद्ध्यन्तराद्विनाश उक्तः, स च तृतीयक्षणवर्तिध्वंसप्रतियोगित्वसिद्धौ स्याद्, अतो बुद्धेरुत्पन्नापवर्गित्वं व्युत्पादनीयं, तत्र सिद्धान्तसूत्रम्—

कर्मानवस्थायित्वग्रहणात् ॥ ४३ ॥

शरीरादिकर्मधाराया अनवस्थायिन्याः प्रत्यक्षधाराऽपि वाच्या, न चाद्यबुद्धेरुत्तरोत्तरग्राहकत्वं विरम्य व्यापाराभावात्, पूर्वपूर्वस्य च परतः परतोऽननुभवाद्विनाशसिद्धावाश्रयनाशादेरभावाद्विरोधिगुणस्यैव नाशकत्वमिति, कर्मवत् बुद्धेरनवस्थायित्वग्रहणादिति वार्थः ॥ ४३ ॥

शङ्कते—

अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्संपाते रूपाव्यक्तग्रहणवत् ॥ ४४ ॥

बुद्धिर्यद्याशुविनाशिनी स्याद्योग्याशेषविशेषधर्मविशिष्टधर्मिग्राहिणी न स्याद्विद्युत्संपातकालीनवस्तुग्रहणवत्, न चैवं, तस्मान्न तथेत्यर्थः ॥ ४४ ॥

उत्तरयति—

हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४५ ॥

प्रतिषेद्धव्यस्य बुद्धेराशुविनाशित्वस्याभ्यनुज्ञा त्वया कृता विद्युत्संपातदृष्टान्तरूपस्य हेतोः साधकस्योपादानात्, तथा चांशतो बाध इति भावः ॥ ४५ ॥

अस्तु तर्हि तद्दृष्टान्तेनान्यासां बुद्धीनामनवस्थायित्वमित्यत्राह—

**प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् ॥ ४६ ॥**

यथा प्रदीपार्चिषां सन्तन्यमानानामनवस्थायित्वेऽस्याभिव्यक्तग्रहणं, तथाऽन्यत्रापि स्यात्। विद्युत्संपातस्थले या बुद्धिरुत्पन्ना सा स्वविषये व्यक्तैवेति भावः ॥ ४६ ॥

समाप्तं बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ॥ ४ ॥

———— ० ————

अथ बुद्धेः शरीरगुणत्वाभावप्रकरणं, न च प्रागेव तत्सिद्धेरनारम्भणीयमेतत्, गौरोऽहं जानामीत्याद्यनुभवेन तत्साधकानामाभासीकरणाद्,अतो विशिष्य तद्व्युत्पादनाय संशयबीजमाह—

**द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ४७ ॥**

द्रव्ये चन्दनादौ स्वगुणस्य रूपादेः परगुणस्य शैत्यादेश्च ग्रहाद्, एवं शरीरे रूपादेरौष्ण्यस्य च ग्रहाद् बुद्ध्यादिः शरीरगुणो न वेति संशयः ॥ ४७ ॥

तत्र सिद्धान्तसूत्रम्—

**यावच्छरीरभावित्वाद् रूपादीनाम् ॥ ४८ ॥**

'न शरीरगुणश्चेतना' इति आदौ भाष्यकृतः पूरणं, न शरीरविशेषगुण इत्यर्थः। अयं च तर्काकारः—बुद्ध्यादिकं शरीरविशेषगुणः स्याद्यावच्छरीरभावि स्यात् रूपादिवत्। तत्परिष्कार्यं चानुमानं बुद्ध्यादिकं न शरीरगुणः अयावद्द्रव्यभावित्वात् शब्दवत्, व्यतिरेके रूपवद्वा। अयावद्द्रव्यभावित्वं च आश्रयत्वाभिमतकालीननाशप्रतियोगित्वम् ॥ ४८ ॥

पिठरपाकमते व्यभिचारमाशङ्कते—

**न पाकजगुणान्तरोत्पत्तेः ॥ ४९ ॥**

शरीरे पाकाधीनरूपादिना व्यभिचारान्नोक्तं साधनं युक्तमित्यर्थः। परे तु सिद्धान्तसूत्रमेवेदं, तथाहि न पाकजरूपेण व्यभिचारः शङ्कनीयः, पाकजगुणान्तरस्य रूपान्तरस्योत्पत्तेः। तथा च स्वसमानाधिकरणस्वसमानजातीयासमानकालीनत्वं पूर्वोक्तहेतौ नाश प्रतियोगित्वे विशेषणीयमित्यर्थ इत्याहुः ॥ ४९ ॥

सिद्धान्तसूत्रम्-

प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ५० ॥

पाकजानां प्रतिद्वन्द्विनि पूर्वशरीरप्रतिरूपके शरीरान्तरे सिद्धेः घटादौ पाकजरूपसम्भवेऽपि शरीरे न तत्संभवः शरीरावयवानां चर्मादीनामग्निसंयोगविशेषेण नाशावश्यकत्वात्। परे तु—पाकजानां प्रतिद्वन्द्विनोऽग्निसंयोगात् सिद्धेः, तथा च तादृशाग्निसंयोगनाश्येऽग्निसंयोगजन्ये च न व्यभिचार इत्याहुः। अन्ये तु—शरीरगुणत्वाभावे हेत्वन्तरमाह-प्रतिद्वन्द्वीति, पाकजानां पूर्वरूपादिकं प्रतिद्वन्द्वि=विरोधि एकस्मिन् रूपे विद्यमाने रूपान्तराभावात्, प्रकृते त्वेकस्मिन् ज्ञाने सत्यपि द्वितीयक्षणे ज्ञानान्तरोत्पत्तेर्ज्ञानादिकं न शरीरविशेषगुण इत्यर्थ इत्याहुः ॥ ५० ॥

हेत्वन्तरमाह—

शरीरव्यापित्वात् ॥ ५१ ॥

शरीरविशेषगुणानामिति शेषः। ज्ञानसुखादिकं तु न शरीरव्यापकम्। हृदयाद्यवच्छेदेन तदानुभविकत्वादिति भावः ॥ ५१ ॥

दूषयति—

न केशनखादिष्वनुपलब्धेः ॥ ५२ ॥

शरीररूपादेराश्रयव्यापकत्वं न शारीरस्य गौररूपस्पर्शादेः केशनखादावनुपलब्धेरित्यर्थ ॥ ५२ ॥

दूषयति—

त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥५३॥

स्पष्टम्। अन्ये तु चेतना न शरीरगुणः शरीरव्यापित्वात्, शरीरे तदवयवेषु सर्वेष्वेकेन संबन्धेन सत्त्वात्, शरीरगुणस्तु न स्वावयववृत्तिः, शङ्कते—न केशेति। चैतन्यस्यानुपलब्धेः। समाधत्ते—त्वगिति, इत्याहुः ॥ ५३ ॥

हेत्वन्तरमाह-

शरीरगुणवैधर्म्यात् ॥ ५४ ॥

बुद्धिर्न शरीरगुणः शरीरगुणवैधर्म्यात् बहिरिन्द्रियावेद्यत्वे सति मनसा वेद्यत्वात् ॥ ५४ ॥

आक्षिपति—

न रूपादीनामितरेतरवैधर्म्यात् ॥ ५५ ॥

नोक्तं युक्तं रूपादीनां परस्परवैधर्म्यात्। तथा च त्वद्रीत्या स्पर्शादीनां शरीरगुणत्वं न स्यादचाक्षुषत्वात्। तथा चोक्तमप्रयोजकमिति भावः ॥ ५५ ॥

समाधत्ते—

ऐन्द्रियकत्वाद् रूपादीनामप्रतिषेधः ॥ ५६ ॥

रूपादीनां न शरीरगुणत्वप्रतिषेधः। कुतः? ऐन्द्रियकत्वात् तत्तदिन्द्रियाग्राह्यत्वलक्षणतत्तद्‍गुणवैधर्म्येऽपि शरीरगुणत्वावच्छिन्नवैधर्म्यस्य बहिरिन्द्रियाग्राह्यत्वे सति ग्राह्यत्वस्याभावात्। बुद्धौ च तत्सत्त्वादिति भावः ॥ ५६ ॥

समाप्तं बुद्धेः शरीरगुणभेदप्रकरणम् ॥ ५ ॥

---

अथ क्रमप्राप्ता मनःपरीक्षा। तत्र प्रतिशरीरमेकं मनः चक्षुरादिसहकारितया मनःपञ्चकं वेति संशये मनःपञ्चकमेवोचितं, तेन प्रत्येकसकलमनःसम्बन्धाभ्यां व्यासङ्गयौगपद्ये उपपद्येते इति पूर्वपक्षे सिद्धान्सूत्रम्—

ज्ञानायौगपद्यादेकं मनः ॥ ५७ ॥

प्रतिशरीरं मनोनानात्वे व्यासङ्गस्थलेऽपि यौगपद्यं स्यादतो न मनोनानात्वमिति भावः ॥ ५७ ॥

दीर्घशष्कुलीभक्षणादौ ज्ञानयौगपद्यान्नानात्वं स्यादित्याशङ्कते—

न, युगपदनेकक्रियोपलब्धेः ॥ ५८ ॥

न एकं मनः अनेकक्रियाणाम् अनेकज्ञानानामुपलब्धेरित्यर्थः ॥ ५८ ॥

समाधत्ते—

अलातचक्रदर्शनवत् तदुपलब्धिराशुसंचारात् ॥ ५९ ॥

क्रमिकेऽपि तदुपलब्धेर्यौगपद्योपलब्धिराशुसंचारात् शीघ्रसंचारात्मकाद्दोषात्, यथा अलातचक्रे वेगातिशयेन भ्राम्यमाणे क्रियासन्तानस्य भेदेनानुपलब्धिरिति ॥ ५९

ननु यौगपद्योपपादकतया मनसो वैभवं स्यादत्राह—

यथोक्तहेतुत्वाच्चाणु ॥ ६० ॥

मन इति शेषः। यथोक्तस्य ज्ञानायौगपद्यस्य हेतुत्वात्=मनोऽणुत्वसाधकत्वादित्यर्थः ॥ ६० ॥

समाप्तं मनःपरीक्षाप्रकरणम् ॥ ६ ॥

---

अथ प्रसङ्गाच्छरीरस्य तत्तत्पुरुषादृष्टनिष्पाद्यताप्रकरणम्। अथवा एकत्रैव शरीरे मनसः सर्वैरात्मभिः सह संयोगात् सर्वत्रैव मनसा ज्ञानं जन्यतामतस्तत्तददृष्टजन्यताप्रतिपादनप्रकरणम्। तत्र शरीरं तत्तत्पुरुषसमवेतादृष्टनिमित्तकं न वेति विप्रतिपत्तौ निषेधकोटिस्त्रेधा—अदृष्टाभावात्, तस्य शरीरहेतुत्वाभावात्, अदृष्टस्य * पुरुषसमवायाभावाद्वा। तत्राद्यपक्षन्निरस्यति—

पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ६१ ॥

पूर्वकृतस्य=यागदानहिंसादेः फलस्य=धर्माधर्मरूपस्य अनुबन्धात्=सहकारिभावात् तस्य=शरीरस्योत्पत्तिः ॥ ६१ ॥

आक्षिपति—

भूतेभ्यो मूर्त्युपादानवत् तदुपादानम् ॥ ६२ ॥

भूतेभ्य इति सावधारणम्। तथा चादृष्टनिरपेक्षेभ्यो भूतेभ्यः। परमाणुभ्यो मूर्त्तेर्मृदादेरुपादानमारम्भो यथा, तथैव तस्य शरीरस्य उपादानमारम्भः। परमाणुभ्योऽदृष्टनिरपेक्षेभ्य इत्यर्थः ॥ ६२ ॥

समाधत्ते—

न साध्यसमत्वात् ॥ ६३ ॥

नोक्तं युक्तं दृष्टान्तस्य साध्यसमत्वात्=पक्षसमत्वात्, मृदादेरप्यदृष्टसापेक्षपरमाणुभ्य एवोत्पत्तेरुपगमात्तदजन्यत्वस्य तत्रासिद्धेरिति भावः ॥ ६३ ॥

न मृदादिसाम्यमित्याह सूत्राभ्याम्—

नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६४ ॥

तथाऽऽहारस्य ॥ ६५ ॥

---

* आत्मस० इति पाठान्तरम्।

शरीरे न मृदादिसाम्यं मातापित्रोः कर्मणः शरीरोत्पत्तिनिमित्तत्वात् । पुत्रदर्शनादिजन्यसुखानुभावकादृष्टस्य देवाराधनादिजन्यस्य पुत्रादिनिमित्तत्वात् । एवं मातापित्रोराहारस्य शरीरोत्पत्तिनिमित्तत्वाददृष्टसहकारेणाहारस्य शुक्रशोणितादिद्वारा कललादिजनकत्वात् आहारस्य पितामहपिण्डभोजनादेरदृष्टद्वारेण पुत्रजनकत्वादित्यर्थ इत्यन्ये ॥ ६४ ॥ ६५ ॥

आहारस्यादृष्टसहकारित्वे विपक्षे बाधकमाह—

**प्राप्तौ चानियमात् ॥ ६६ ॥**

प्राप्तौ दम्पत्योः संप्रयोगे तु गर्भधारणस्य यतो न नियमस्ततोऽदृष्टस्य सहकारित्वमावश्यकमिति भावः ॥ ६६ ॥

नन्वदृष्टनिरपेक्षैरेव भूतैः कैश्चित् स्वभावविशेषाच्छरीरं जन्यतां, स्वभावानभ्युपगमे च शरीरस्य सर्वात्मसंयुक्तत्वात् साधारण्यापत्तिरत आह—

**शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म ॥ ६७ ॥**

अयमर्थः—शरीरस्य सर्वात्मसंयुक्तत्वेऽपि संयोगविशेषोऽवच्छेदकतालक्षणो, येनात्मना सह तदीयं तच्छरीरं संयोगविशेष एव । कुत इत्यत आह—संयोगेति । संयोगविशेषोत्पत्तौ कर्म=अदृष्टविशेषो निमित्तं, यथा शरीरोत्पत्तावदृष्टविशेषो निमित्तमिति संयोगविशेषस्तदात्मज्ञानजननियामको जातिविशेष एव । संयोगः शरीरावयवसंस्थानविशेष इति कश्चित् ॥ ६७ ॥

अथ शरीरं नादृष्टजन्यं प्रकृतेरारम्भस्वभावत्वादेव तदुपपत्तेः, प्रतिबन्धकपूर्वशरीरापगमस्त्वदृष्टाधीनः जलस्य निम्नानुसरणस्वभावस्येव बन्धापगमाधीनत्वम् इति द्वितीयपक्षं सांख्यसंमतं निरस्यति—

**एतेनानियमः प्रत्युक्तः ॥ ६८ ॥**

एतेन = अदृष्टहेतुकत्वव्यवस्थापनेन, अनियमस्तु आत्मनः कदाचिन्मानुषशरीरसंबन्धः कदाचिदन्यादृशः, किंचिच्च शरीरं सकलावयवं, किंचिच्च विकलावयवमित्यादि, अदृष्टहेतुत्वानभ्युपगमे त्वयमनियमो, न त्वस्मन्मते; किंचादृष्टनिरपेक्षप्रकृतिमात्रारब्धत्वे सर्वात्मसाधारण्यं शरीरस्य स्यात् इति भावः । अन्ये तु अदृष्टमप्यनियतं

स्यादित्यत्राह—एतेनेति । तत्राप्यदृष्टान्तरमित्यनादित्वमेवेति भाव इत्याहुः ॥ ६८ ॥

आर्हतास्तु मनःपरमाणुगुणमदृष्टं मन्यन्ते । तथाहि पार्थिवाः परमाणवः सहिताः स्वादृष्टवशाच्छरीरमारभन्ते, मनश्च स्वादृष्टप्रयुक्तशरीरमाविशति, तच्चादृष्टं स्वभावादेव पुद्गलस्य सुखदुःखे साधयतीति, तत्रोत्तरमाह—

**तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे ॥ ६९ ॥**

तत्तदात्मादृष्टोपग्रहं विनैव तत्तदात्मोपभोगाय पराणवश्चेच्छरीरमारभन्ते, मुक्तेऽपि तदात्मनि तद्भोगाय शरीरमारभेरन्, अपवर्ग इत्युपलक्षणं, संसारिणामपि नरकरितुरगादिशरीरोपग्रहे विनिगमकं न स्यादिति भावः ॥ ६९ ॥

अदृष्टस्य मनोगुणत्वमपि दूषयति—

**मनःकर्मनिमित्तत्वाच्च संयोगाद्यनुच्छेदः ॥ ७० ॥**

संयोगस्य शरीरारम्भकस्य ज्ञानादिजनकस्य च उच्छेदो न स्यात् कुतः ? मनसो यत् कर्म अदृष्टं तन्निमित्तत्वात्, तस्य नित्यत्वात् तादृशसंयोगधारा नोच्छिद्येत । तस्यानित्यत्वेऽपि व्यधिकरणभोगस्य तन्नाशकत्वेऽतिप्रसङ्ग इति भावः ॥ ७० ॥

संयोगानुच्छेदे का क्षतिरत आह—

**नित्यत्वप्रसंगश्च प्रायणानुपपत्तेः ॥ ७१ ॥**

तथा सति प्रायणस्य मरणस्यानुपपत्तेः शरीरादेर्नित्यत्वस्य=अविनाशित्वस्य प्रसङ्गः ॥ ७१ ॥

आक्षिपति—

**अणुश्यामतानित्यत्ववदेतत् स्यात् ॥ ७२ ॥**

यथा परमाणोः श्यामता नित्याऽपि निवर्तते, तथा शरीरादिकमपि निवर्त्तते । तथैव परमाणुनिष्ठं नित्यमप्यदृष्टं निवर्तते । तदभावात्तु नापवर्गे शरीरमिति ॥ ७२ ॥

सिद्धान्तसूत्रम्—

**नाकृताभ्यागमप्रसंगात् ॥ ७३ ॥**

अकृतस्य प्रमाणाविषयस्य अभ्यागमः स्वीकारस्तत्प्रसङ्गादित्यर्थः नहि परमाणुनिष्ठाऽदृष्टस्य कारणस्य सत्त्वे शरीरोच्छेदः स्यादेवमणु

श्यामतानित्यत्वस्याऽपि प्रमाणागोचरस्य स्वीकारः स्यात्, तथा च दृष्टान्तासिद्धिः। न चानादेर्भावस्य नाशः संभवति जन्यभावत्वेन हेतुत्वात्, यद्वा नित्यादृष्टाच्छरीरसंबन्धोपगमे अकृतात् स्वयमजनितात् कर्मणोऽभ्यागमः = फलसंबन्धः स्यात्, तथा च स्वकृतत्वाविशेषात् किं शरीरं कस्य भविष्यतीत्यत्र नियामकाभाव इति भावः ॥ ७२ ॥

समाप्तं शरीरस्यादृष्टनिष्पाद्यताप्रकरणं ॥ ७ ॥

समाप्तं च तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ
तृतीयाध्यायवृत्तिः समाप्ता ॥

शूरकोटिविजयि प्रभाभरं योगिमानसचरं परं महः।
श्यामलं किमपि धाम कामदं कामकोटिकमनीयमाश्रये ॥

तृतीये तावदात्मादिप्रमेयषट्कं कारणरूपं परीक्षितम्, अथ कार्य्यरूपं प्रवृत्त्यादिप्रमेयषट्कमवसरतो हेतुहेतुमद्भावेन च परीक्षणीयम्। यद्यपि प्रथमाह्निके षट्कं परीक्षणीयं, द्वितीयाह्निके तु तत्त्वज्ञानं, तथाऽपि तस्यापवर्गहेतुत्वादुपोद्घातेन च परीक्षणीयत्वादपवर्गपरीक्षान्तःपातितया षट्कपरीक्षैवाध्यायार्थः। तत्र प्रथमाह्निके चतुर्दश प्रकरणानि; तत्र चोक्तरूपवत्तया प्रवृत्तिदोषयोः परीक्षा प्रथमप्रकरणार्थः, नचाऽर्थभेदात्प्रकरणभेदः, यथा तथेति परस्परसाकाङ्क्षाभ्यामवयवाभ्यामुक्तरूपवत्त्वलक्षणैकार्थकत्वकथनात्। प्रवृत्तिपरीक्षायामाकाङ्क्षितायां सूत्रम्—

प्रवृत्तिर्यथोक्ता ॥ १ ॥

अत्र तथैवेति शेषं पूरयन्ति। तदयुक्तं, तथा सत्यत्रैव यथाशब्दस्याकाङ्क्षाशान्तावग्रिमसूत्रस्थतथाशब्देऽपि यथाशब्दान्तरस्य पूरणीयतया प्रकरणभेदापत्तेस्तस्मादग्रिमसूत्रस्थतथाशब्देनान्वयो युक्तः। प्रवृत्तिर्यथा उक्तलक्षणवती, तथा दोषा अप्युक्तलक्षणवन्त इत्यग्रिमसूत्रसंवलितोऽर्थः। "प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः" (१।१।१८) इत्युक्तलक्षणसत्त्वान्नासिद्धं लक्षणमिति भावः। प्रवृत्तिस्तु द्वयी, कारणरूपा कार्य्यरूपा च। द्वे अप्यात्मसमवेते। तत्राद्या जन्यत्वेनाऽविशिष्टा

विशिष्टा च यत्नत्वजात्या, अतःप्रत्यक्षसिद्धा। द्वितीया तु धर्माधर्मरूपा यागादेरगम्यागमनादेश्च चिरध्वस्तस्य व्यापारतया कर्मनाशाजलस्पर्शादेःप्रायश्चित्तादेश्च नाश्यतया सिध्यतीति ॥ १ ॥

दोषपरीक्षायां प्राप्तायामाह—

तथा दोषाः ॥ २ ॥

तथा दोषा अपि, प्रवर्त्तनालक्षणा इत्युक्तलक्षणवन्त एवेति, नासिद्धिरिति भावः ॥ २ ॥

समाप्तं प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ॥ १ ॥

अथ त्रैराश्येन विशेषेण दोषपरीक्षणाय तत्त्रैराश्यप्रकरणम्, तत्र सिद्धान्तसूत्रम्—

तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥

तेषां दोषाणां त्रयो राशयस्त्रयः पक्षाः न तु रागद्वेषमोहानामेकैकत्वं तेषामर्थान्तरभावात् = अवान्तरभेदवत्त्वात्। तथा च भयशोकमायादीनामेष्वेवान्तर्भावान्न विभागन्यूनत्वम्। इच्छात्वद्वेषत्वमिथ्याज्ञानत्वरूपविरुद्धधर्मवत्त्वान्न विभागाधिक्यम्। इच्छात्वादिकं तु रागादावनुभवसिद्धं, तत्र रागपक्षः कामो मत्सरः स्पृहा तृष्णा लोभो माया दम्भ इति, कामो=रिरंसा, रतिश्च विजातीयः संयोगः नारीगताभिलाष इति तु न युक्तं स्त्रियाः कामेऽव्याप्तेः। मत्सरः= स्वप्रयोजनप्रतिसन्धानं विना पराभिमतनिवारणेच्छा, यथा राजकीयादुदपानान्मोदकं पा * इत्यादि, एवं परगुणनिवारणेच्छाऽपि। स्पृहा=धर्माविरोधेन प्राप्तीच्छा। तृष्णा-इदं मे न क्षीयतामितीच्छा। उचितव्ययाकरणेन अपि धनरक्षणेच्छारूपं कार्पण्यमपि तृष्णाभेद एव। धर्मविरोधेन परद्रव्येच्छा लोभः। परवञ्चनेच्छा माया। कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा दम्भः। द्वेषपक्षः— क्रोध ईर्ष्याऽसूया द्रोहोऽमर्षोऽभिमान इति। क्रोधो—नेत्रलौहित्यादिहेतुर्द्वेषविशेषः। ईर्ष्या-साधारणे वस्तुनि परस्वत्वात् तद्ग्रहीतरि द्वेषः, यथा दुरन्तदायादानाम्। असूया परगुणादौ द्वेषः। द्रोहो-नाशाय द्वेषः। हिंसा तु द्रोहजन्या, परेतु तां द्रोहं मन्यन्ते। अमर्षः-कृतापराधेऽसमर्थस्य द्वेषः। अभिमानोऽपकारिण्यकिंचित्करस्या-

* 'मोदकं पेयम्' इतिपाठान्तरम्।

ऽऽत्मनि द्वेषः। मोहपक्षः—विपर्य्ययसंशयतर्कमानप्रमादभयशोकाः। विपर्य्ययो—मिथ्याज्ञानापरपर्य्यायोऽयथार्थनिश्चयः; एकधर्मिकविरुद्धभावाभावज्ञानं संशयः, स एव विचिकित्सेत्युच्यते। व्याप्यारोपाद् व्यापकप्रसञ्जनं तर्कः। आत्मन्यविद्यमानगुणारोपेणोत्कर्षधीर्मानः। गुणवति निर्गुणत्वधीरूपं स्मयमपि मानेऽन्तर्भावयन्ति। प्रमादः—पूर्वं कर्त्तव्यतयाऽवधारितेऽप्यकर्त्तव्यताधीः, एवं वैपरीत्येऽपि। भयम्—अनिष्टहेतूत्पाते तत्परित्यागानर्हताज्ञानम्। शोकः—इष्टवियोगे तल्लाभानर्हताज्ञानम्॥ ३॥

नैकप्रत्यनीकभावात्॥ ४॥

रागादीनां भेदो न एकप्रत्यनीकभावात् एकस्मिन् प्रत्यनीकभावो विरोधित्वं यस्य त्तत्तथा, तेनैकनाश्यत्वादित्यर्थः। एवं हि तत्त्वज्ञानमेषां विरोधि॥ ४॥

समाधत्ते—

व्यभिचारादहेतुः॥ ५॥

एकविरोधित्वं भेदनिषेधे न हेतुर्व्यभिचारात्, एकाग्निसंयोगनाश्यत्वेऽपि रूपादीनां भेदात्॥ ५॥

किं च नैतेषामेकनिवर्त्यत्वं तत्त्वज्ञानस्य मोहनिवर्तकत्वात्तन्निवृत्त्या रागादिनिवृत्तेरित्याशयेनाह—

तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः॥ ६॥

यद्यपि बहूनां निर्धारणे इष्ठनस्तमपो वा विधानात् पापतमः पापिष्ठ इति वा युक्तं, तथाऽपि द्वौ द्वावधिकृत्य निर्धारणं, द्वयोर्निर्धारणे ईयसुनो विधानात्, तेन रागमोहयोर्द्वेषमोहयोर्वा मोहः पापीयाननर्थमूलं बलवद्द्वेष्य इति यावत्; हेतुमाह—नामूढस्येति। मोहशून्यस्य रागद्वेषयोरभावादित्यर्थः। न च तत्त्वज्ञानिनोऽपि हिताहितगोचरप्रवृत्तिनिवृत्ती रागद्वेषाधीने इति, तत्र व्यभिचार इति वाच्यम्। धर्माधर्मप्रयोजकरागद्वेषयोर्दोषत्वेन विवक्षितत्वात्, एतदभिप्रायकमेवासक्तो द्विषंश्च मुक्त इत्यादिकमपीति भावः॥ ६॥

शङ्कते—

प्राप्तस्तर्हि निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः॥ ७॥

दोषनिमित्तत्वान्मोहस्य दोषभिन्नत्वं स्याद्भेदेन कार्य्यकारणभावाभावात्। दोषेभ्य इत्यान्तर्गणिकभेदाद्बहुवचनं। प्रासस्तर्हीत्यंशस्तु न सूत्रं, किं तु भाष्यकृतः पूरणमित्यपि वदन्ति ॥ ७ ॥

निराकरोति—

**न दोषलक्षणसत्त्वात्* मोहस्य ॥ ८ ॥**

मोहस्य दोषलक्षणसत्त्वाद्दोषत्वं, व्यक्तिभेदाच्च हेतुहेतुमद्भावो न विरुध्यत इति भावः ॥ ८ ॥

अप्रयोजकत्वमुक्त्वाऽनैकान्तिकत्वमप्याह—

**निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥९॥**

एकजातीययोरपि द्रव्ययोर्गुणयोश्च निमित्तनैमित्तिकोपपत्तेर्हेतुहेतुमद्भावस्वीकारात् तुल्यजातीयत्वप्रतिषेधो न युक्त इति ॥ ९ ॥

समाप्तं दोषपरीक्षाप्रकरणम् ॥ २ ॥

---

क्रमप्राप्ततया प्रेत्यभावे परीक्षणीये प्रेत्यभावः शरीरस्य बुद्धेरात्मनो वेति संशये 'पुनरुत्पत्तिः प्रेत्यभावः' इति लक्षणसूत्राद्विनष्टस्योत्पादः प्रतीयते, न चासौ नित्यस्यात्मनः संभवतीति शरीरादेः स्यात्, न च मृतस्य शरीरादेरुत्पत्तिविरोधान्नेदं युक्तमिति वाच्यं, प्रत्यभाव इत्यस्य मुखं व्यादाय स्वपितीतिवत् व्यत्ययेन भूत्वा प्रायणमित्यर्थात्, अत्र सिद्धान्तसूत्रम्—

**आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥**

आत्मनः पूर्वोक्तयुक्त्या नित्यत्वे प्रेत्यभावस्तस्य सिध्यति। एकजातीयशरीराद्यसम्बन्धचरमसंबन्धनाशयोरुत्पादप्रायणयोरात्मनः सम्भवात्, सम्बन्धस्त्ववच्छेद्यावच्छेदकभावलक्षणः। स च स्वरूपसम्बन्धविशेषोऽतिरिक्तो वेत्यन्यदेतत्। लक्षणसूत्रे पुनरुत्पत्तिरित्यत्र पुनःपदं च प्रेत्यभावप्रवाहस्याऽनादित्वज्ञापनाय, तज्ज्ञानं च वैराग्य उपयुज्यत इति ॥ १० ॥

ननु प्रेत्यभाव उत्पत्तिनिरूप्यः; सा च न सजातीयाद् विजातीयाद्वा संभवति। आद्ये पृथिव्यादौ व्यभिचारात्, तन्नित्यत्वे माना-

---

* न्यायसूचीनिबन्धादौ "अवरोधात्" इत्येव पाठः। अत्र तु वृत्तिमनुसृत्य "सत्त्वात्" इति निवेशितम् ॥

भावादतः प्रेत्यभावोऽसिद्ध इत्युपोद्घातात् प्रसङ्गाद्वोत्पत्तिप्रकारं दर्शयति—

**व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥**

व्यक्तानामुत्पत्तिरिति शेषः। व्यक्ताद्=व्यक्तजातीयात् पृथिव्यादितो व्यक्तानां=व्यक्तजातीयानां=जन्यपृथिव्यादीनामुत्पत्तिः। इत्थं च पृथिव्यादेः पृथिव्यादितो रूपवदादितो रूपवदादीनामुत्पत्तेः प्रत्यक्षसिद्धत्वात् परमाणुरपि कल्प्यते, त्रसरेणोरपकृष्टमहत्त्वेन सावयवावयवत्वसिद्धेस्तस्य लाघवान्नित्यत्वमिति भावः ॥ ११ ॥

अबुद्ध्वा शङ्कते—

**न घटाद्घटानिष्पत्तेः ॥ १२**

विशेषकार्य्यकारणभावाभावे सामान्यतोऽपि न तथेति भावः ॥१२॥

विशेषतो व्यभिचारो न विरोधी, सामान्यतस्तु नास्त्येवेत्याशयवान् समाधत्ते—

**व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥**

सजातीयात् सजातीयोत्पत्तेर्न प्रतिषेधः, पृथिवीजातीयात् कपालादितो घटादिनिष्पत्तेः उक्तापादनं चाप्रयोजकमिति भावः ॥१३॥

समाप्तं प्रेत्यभावपरीक्षाप्रकरणम् ॥ ३ ॥

---

अथात्राष्टौ प्रकरणानि प्रसङ्गाद् व्यक्तानामित्येतत्सिध्यर्थमुपोद्घाताद्वा। तत्रादौ शून्यतोपादानप्रकरणं, तत्र पूर्वपक्षसूत्रम्—

**अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १४ ॥**

अभावादुपादानात् कार्याणां भावानामुत्पत्तिर्यतोऽङ्कुरादेर्बीजादिकमनुपमृद्य न प्रादुर्भावः, तथा च बीजादिविनाशोऽङ्कुराद्युपादानमिति ॥ १४ ॥

अत्रोत्तरम्—

**व्याघातादप्रयोगः ॥ १५ ॥**

उपमृद्य प्रादुर्भवतीति न युक्तः प्रयोगो व्याघाताद्, उपमर्दकस्य पूर्वमसत्त्वे उपमर्दकत्वायोगात्। सत्त्वे च परतः प्रादुर्भावायोगात् ॥१५॥

पूर्वपक्षी दूषयति—

**नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥**

नायुक्तः प्रयोगः अतीतेऽनागते च कारकशब्दप्रयोगात् कर्तृकर्मादिबोधकशब्दप्रयोगात्। यथा जनिष्यते पुत्रः, जनिष्यमाणं पुत्रमभिनन्दति, अभूत्कुम्भो, भिन्नं कुम्भमनुशोचति ॥ १६ ॥

नन्वास्तामौपचारिकः प्रयोगस्तथाऽपि किं बीजादेर्विनष्टस्योपादानत्वं मन्यसे, बीजादेर्विनाशस्य वा, अन्त्येऽपि तस्योपादानत्वं निमित्तत्वं वा। तत्राद्ये उत्तरम्—

**न विनष्टेभ्यो ऽनिष्पत्तेः ॥ १७ ॥**

विनष्टानां बीजादीनामुपादानत्वायोगाद्, अतएव न द्वितीयः, तत्र विनष्टं विनाशस्ततो नोत्पत्तिर्द्रव्यत्वस्य भावकार्य्यसमवायिकारणतावच्छेदकत्वात् ॥ १७ ॥

तृतीये त्वाह—

**क्रमनिर्देशादप्रतिषेधः ॥ १८ ॥**

अभावस्य कारणत्वं प्रतिषिध्यते प्रतिबन्धकाभावस्य हेतुत्वोपगमादित्याह—क्रमेति। बीजे विनष्टेऽङ्कुरो जायत इति प्रत्ययाद्बीजस्य प्रतिबन्धकस्याऽभावः कारणं, बीजे विनष्टे हि तदवयवैर्जलादिसिक्तभूम्यवयवसहितैरङ्कुर आरभ्यते, अभावमात्रस्य कारणत्वे च चूर्णीकृतादपि बीजादङ्कुरोत्पत्तिः स्यादभावस्य निर्विशेषत्वादिति भावः ॥१८॥

समाप्तं शून्यतोपादाननिराकरणप्रकरणम् ॥ ४ ॥

---

मतान्तरमाह—

**ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ॥ १९ ॥**

अनेन ब्रह्मपरिणामवादो ब्रह्मविवर्त्तवादो वा दर्शित इति वदन्ति। तथाहि ब्रह्मैव नामरूपप्रपञ्चभेदेन विपरिणमते, मृत्तिकेवोदञ्चनादिभावेन। अतः एव प्राकृतरूपस्य सत्त्वस्यापरित्यागः प्रपञ्चेषु, उदञ्चनादाविव मृत्तिकात्वस्येति परिणामवादः, ब्रह्मैव वाऽनाद्यनिर्वचनीयाविद्यावशान्नानारूपेण विवर्तते मुखमिव तत्तज्जलाद्यालम्बनभेदादिति विवर्त्तवादः। ननु पुरुषकर्मैव कारणमस्तु, किमीश्वरस्य कारणत्वेनेत्यत आह-पुरुषेति। पुरुषकर्मणो हि वैफल्यमपि दृश्यते, अतः सहकार्यन्तरमवश्यं वाच्यम्। तथा चेश्वर एव यथा यथेच्छति तथा जगद्विपरिवर्तत इत्येवास्तु किं पुरुषकर्मणेति भावः। वस्तुतस्तु केव-

लेश्वरकारणतापरं प्रकरणं तदुपादानतापरत्वे तु न किमपि मानमाकलयाम इति ॥ १९ ॥

समाधत्ते—

पुरुषकर्माभावे फलानिष्पत्तेः ॥ २० ॥

केवलं ब्रह्मण एव हेतुत्वे तदिच्छाया अव्यतिरिक्तायास्तद्विषयतायाश्चानभ्युपगमादभ्युपगमे द्वैतापत्तिरतः सर्वं सर्वदा स्यान्न स्याच्च कार्यवैचित्र्यमिति। पुरुषकर्मणोऽपि सहकारिताऽवश्यकी, ब्रह्मण उपादानत्वं तु न संभवत्यसमवायिकारणत्वासंभवात्तस्य कारणतामात्रं त्विष्यत एवेति भावः ॥ २० ।

नन्वेवं पुरुषव्यापारस्य फले व्यभिचारो न स्यादिति चेत्तत्राह—

तत्कारितत्वादहेतुः ॥ २१ ॥

फलाभावस्य पुरुषकर्माभावकारितत्वात् पुरुषस्य कर्म=अदृष्टं तदभावाधीनत्वात् पुरुषकारः अहेतुः फलानुपधायकः। नन्वीश्वर एव क इत्यत्र भाष्यं-"गुणविशिष्टमात्मान्तरमीश्वरः"। गुणैर्नित्यज्ञानेच्छाप्रयत्नैः सामान्यगुणैश्च संयोगादिभिर्विशिष्टमात्मान्तरं जीवेभ्यो भिन्न आत्मा जगदाराध्यः सृष्ट्यादिकर्ता वेदद्वारा हितोपदेशको जगतः पितेति। परे तु प्रसङ्गादीश्वरप्रतिहानादनादेयेयं त्रिसूत्री, तथाहि-ईश्वरः कारणम्, अर्थाज्जन्यजातस्य। अनुमानन्तु-'क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदित्यूह्यम्। ननु जीवानामेव कर्तृत्वं स्यादत्राह—पुरुषेति। पुरुषकर्मणां वैफल्यं दृश्यते, तथा च विफले कर्मणि प्रवर्त्तमानत्वादज्ञत्वं जीवानां; यत उपादानगोचरापरोक्षज्ञानादिमतो हि कर्तृत्वं, न च क्षित्याद्युपादानगोचरमपरोक्षज्ञानं जीवानामिति भावः। नन्वदृष्टद्वारा जीवानां कर्तृत्वमस्त्वित्याशङ्कते—न पुरुषेति। फलस्य कार्य्यस्य कर्माभावेऽनिष्पत्तेः तत्तत्पुरुषभोगसाधनत्वात् तत्कर्मजन्यत्वमिति स्फोरणाय—पुरुषेति। समाधत्ते—तदिति। कर्मणोऽपि तत्कारितत्वादीश्वरकारितत्वाद् चेतनस्य चेतनाधिष्ठितस्यैव जनकत्वादिति भावः ॥ २१ ॥

समाप्तमीश्वरोपादानताप्रकरणम् * ॥ ५ ॥

---

* अस्य प्रकरणस्य अभिप्रेतार्थः श्रीवाचस्पतिमिश्राकृत=ग्रन्थान्ते परिशिष्टेऽवलोकनीयः ॥

यदि च कार्य्याणाम् आकस्मिकत्वं तदा न परमाण्वादीनामुपादानत्वं न चेश्वरस्य निमित्तत्वमत आकस्मिकत्वनिराकरणमारभते, तत्र पूर्वपक्षसूत्रम्—

**अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ॥२२॥**

अनिमित्तत इति प्रथमान्तात्तसिः। अनिमित्ता भावोत्पत्तिरित्यर्थः। भावेति स्पष्टार्थम्। घटाद्युत्पत्तिर्न कारणनियम्या उत्पत्तित्वात् कण्टकतैक्ष्ण्याद्युत्पत्तिवत्। यद्वा घटादिकं न सकारणकं भावत्वात् कण्टकतैक्ष्ण्यादिवत्। तैक्ष्ण्यम्=संस्थानविशेषः। आदिपदान्मयूरचित्रादिपरिग्रहः, तदकारणकमेवेत्याशयः ॥ २२ ॥

एकदेशी भ्रान्तो दूषयति—

**अनिमित्तनिमित्तत्वान्नानिमित्ततः २३ ॥**

अनिमित्तत इति हेतुपञ्चमीनिर्देशादनिमित्तस्यैव निमित्तत्वात् कथमनिमित्तत इति ॥ २३ ॥

दूषयति—

**निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥**

अनिमित्तस्य निमित्तस्य चार्थान्तरभावाद्भेदादुक्तः प्रतिषेधो न युक्तः अनिमित्तस्य निमित्तत्वासम्भवात् शरीरस्याकर्म निमित्तत्वदूषणेनैव च दूषितप्रायमित्याशयेनात्र न दूषितमिति। नव्यास्तु सूत्रद्वयमेवं व्याचक्षते—समाधत्ते—अनिमित्तेति। अनिमित्तस्य अनिमित्तत्वसाधकस्य निमित्तत्वात् अनिमित्तत्वानुमितिजनकत्वादनिमित्तत इति व्याहतम्। अनिमित्तकत्वानुमितिजनकानभ्युपगमेऽनिमित्तत्वं न सिद्ध्येदिति कण्टकतैक्ष्ण्यादिकमपि नानिमित्तकम्, अदृष्टविशेषसहकृतैरणुभिस्तदुत्पादनादिति हृदयम्। दोषान्तरमाह—निमित्तेति। इदमत्र निमित्तमिदमनिमित्तमिति प्रतीत्याऽनयोर्भेदसिद्धेर्निमित्तप्रतिषेधो न युक्तः, इतरथा च सार्वलौकिकी प्रतीतिर्नोपपद्येतेति भावः* ॥ २४ ॥

समाप्तमाकस्मिकत्वप्रकरणम् ॥ ६ ॥

अनिमित्ततावादे वार्त्तिककारप्रदर्शितदूषणानि—

'कण्टकादीनां चानिमित्तं जन्मेति ब्रुवाणः प्रष्टव्यः। किं कण्टक-

सर्वस्यैवानित्यत्वे नात्मादेरपि नित्यत्वं स्यादतः सर्वानित्यत्वनिराकरणप्रकरणम् । तत्र प्रमेयत्वमनित्यत्वव्याप्यं न वेति संशये पूर्वपक्षसूत्रम्—

सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥

अनित्यं विनाशि उत्पत्तिमतो विनाशधर्मकत्वात् । उत्पत्तिमत्त्वं चाकाशादेरपि मेयत्वात्सिद्धमिति भावः, तेन परमते तत्र नासिद्धिः । यद्वा उत्पत्तिविनाशधर्मकत्वात् उत्पत्तिविनाशधर्मकाणां मानसिद्धत्वात्तद्भिन्नमप्रमाणकमिति हृदयम् । परे तु अनित्यत्वं कादाचित्कत्वम् उत्पत्तिधर्मकत्वाद्विनाशधर्मकत्वादिति हेतुद्वये तात्पर्य्यमित्याहुः ॥२५॥

दूषयति—

नानित्यतानित्यत्वात् ॥ २६ ॥

उत्पतिमत्त्वं न विनाशित्वसाधकम् अनित्यताया=ध्वंसस्य नित्यत्वात् अविनाशित्वात्, तत्र व्यभिचारात् ॥ २६ ॥

आक्षिपति—

तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ॥२७॥

मात्रस्य अनिमित्तं जन्म, उत सर्वस्येति । यदि कण्टकमात्रस्य अनिमित्तं जन्म, तच्छेषेण दृष्टान्तेन शक्यं प्रतिपादयितुं निमित्तवदिति। अथ सर्वमनिमित्तम् इत्ययं पक्षः, तथापि व्याघातः, प्रतिपाद्यप्रतिपादकन्यायस्याभ्युपगमात्—सर्वं चानित्यं प्रतिपादयसि चेति व्याघातः । वाक्योपादानाच्च व्याघातः—अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिवदिति वाक्यं प्रतिपादकमुपादीयते, न च निमित्तमस्तीति व्याघातः । अनिमित्ततो भावोत्पत्तिरिति सनिमित्ता भावोत्पत्तिरिति च वाक्ये, यद्यनयोरर्थभेदं प्रतिपद्यसे, वाक्यभेदादर्थभेदप्रतिपत्तिरिति व्याहतं भवति 'अनिमित्ता भावोत्पत्तिरिति । अथ न वाक्यभेदेनार्थभेदं प्रतिपद्यसे, वाक्यविशेषोपादानं व्याहतमिति यत्किंचिद्वाक्यमुपादेयमिति । अनिमित्तं भावोत्पत्तिं प्रतिपद्यमानेन सर्वलोकव्यवहार उच्छिन्नो भवति । अनिमित्ता भावोत्पत्तिरिति च भावमात्रपक्षीकरणे न दृष्टान्तो भवति । अथ शरीराद्येकदेशं पक्षयसि ? तथाप्यन्यतरधर्म्मासिद्धो दृष्टान्तः संस्थानविशेषवत्त्वस्य विद्यमानत्वात्, अनिमित्तत्वस्य चाभावादिति' । ( न्या० वा० )

तस्या अनित्यताया अप्यनित्यत्वं, यथाग्निर्दाह्यस्येन्धनादेर्विनाशानन्तरं स्वयमपि नश्यति, न तु दाह्योन्मज्जनम् । तथा घटादेरपि नाशो नश्यति, न तु घटाद्युन्मज्जनम् । ध्वंसध्वंसस्यापि प्रतियोगिध्वंसत्वात् ध्वंसप्रागभावानाधारकालस्य प्रतियोग्यधिकरणत्वमिति व्याप्तेरप्रयोजकत्वात् नोन्मज्जनमित्यन्ये ॥ २७ ॥

समाधत्ते-

**नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ॥ २८॥**

नित्यस्य = नित्यत्वविशिष्टस्य नित्यत्वस्य न प्रत्याख्यानमिति फलितम् । यथोपलब्धिः उपलब्ध्यनतिक्रमेण, तथा च धर्मिग्राहकमानेन लाघवसहकृतेनाकाशादेर्नित्यत्वव्यवस्थापनादिति ॥ २८ ॥

समाप्तं सर्वानित्यत्वनिराकरणप्रकरणम् ॥ ७ ॥

सर्वनित्यत्वे न प्रेत्यभावादिसिद्धिरतस्तन्निराकरणप्रकरणम्, तत्राद्यपसूत्रम्—

**सर्वं नित्यं पञ्चभूतनित्यत्वात् ॥ २९ ॥**

सर्वं नित्यं भूतत्वात्मेयत्वाद्वा तत्र दृष्टान्तप्रदर्शनाय पञ्चभूतनित्यत्वादित्युक्तं; तेन परमाण्वाकाशदृष्टान्तता लभ्यते ॥ २९ ॥

* समाधत्ते—

**नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥**

सर्वनित्यत्वं न युक्तं घटादीनाम् उत्पत्तिविनाशकारणानां कपालसंयोगमुद्गरपातादीनाम् उपलब्धेस्तथा चोत्पादविनाशावावश्यकाविति ॥ ३० ॥

---

* पञ्चभूतात्मकं खल्वेतद्गोघटादिकार्य्यमुपलभ्यते । व्यपदिशन्ति हि–मृद्घटो मृच्छरीरमिति। भूतानि च नित्यानि, तेषामुच्छेदस्य नैयायिकैरनभ्युपगमात्। तेन भूतानां गोघटादीनां नित्यतेति पूर्वः पक्षः, भूतेभ्यो भौतिकानि भिन्नानि, न हि परमसूक्ष्माः परमाणवः गोघटादयः परमाणुवत्तेषामतीन्द्रियत्वे सर्वाग्रहणप्रसङ्गादित्युक्तं द्वितीयेऽध्याये (२।१।३६) तस्माद्ग्रहणाग्रहणविरुद्धधर्माध्यासयोगादन्ये भौतिकाः भूतेभ्यः । तथा च तेषामुत्पत्तिविनाशकारणोपलब्धेर्न नित्यत्वं भूतनित्यत्वेऽपि, सिद्धान्तमाह—'नो......लब्धेः' इति । (ता० टी०)

पुनः सांख्य आह—

तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥

उक्तः प्रतिषेधो न नित्यस्य परमाण्वादेर्यल्लक्षणम् भूतत्वादि घटादौ तदवरोधात्=तत्सत्त्वात्। तथा चोत्पादादिप्रत्ययो भ्रान्त इति भावः ॥ ३१ ॥

दूषयति—

नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥

अनित्यत्वनिषेधो न युक्त उत्पत्तेस्तत्कारणात्तत्प्रमापकाद्युपलब्धेः। तथा चोत्पादविनाशप्रतीतेः प्रामाणिकत्वान्न तन्निषेधः। इतरथा कादाचित्कत्वप्रतीत्यनुपपत्तेः। न चाविर्भावात्तदुपपत्तिस्तस्यैवानित्यत्वे सर्वनित्यत्वव्याघातात्। विवेचयिष्यते चेदं स्पष्टतरमुपरिष्टात् ॥ ३२ ॥

उत्पादविनाशप्रत्ययस्य भ्रान्तत्वं स्यादित्याशङ्क्याह—

न व्यवस्थानुपपत्तेः ॥ ३३ ॥

सार्वलौकिकप्रमात्वेन सिद्धस्यापि भ्रमत्वशङ्कायां प्रमाभ्रमव्यवहारविलोपः स्यादित्यर्थः ॥ ३३ ॥

समाप्तं सर्वनित्यत्वनिराकरणप्रकरणम् ॥ ८ ॥

अथ प्रसङ्गात्सर्वपृथक्त्वप्रकरणं, तत्र पूर्वपक्षसूत्रम्—

सर्वं पृथग्भावलक्षणपृथक्त्वात् ॥ ३४ ॥

सर्वं वस्तु पृथक्=नाना। लक्ष्यतेऽनेनेति लक्षणम्=समाख्या। तस्याः पृथक्त्वम्=पृथगर्थकत्वम्। तथा च प्रयोगः—'घटादिः समूहरूपः वाच्यत्वात् सेनावनादिवत्'। अतीन्द्रिये गगनादौ मानाभावादात्मनः शरीरानतिरेकाद् गुणकर्मणोराश्रयाभेदाद्विशेषसमवाययोर्मानाभावादभावस्य तुच्छत्वान्न व्यभिचारः। यद्वा—'घटादिकम् स्वस्मादपि पृथक् भावलक्षणानां गन्धरसादीनां तत्तदवयवानां च पृथक्त्वात्', घटादेश्च तदभेदादिति भावः ॥ ३४ ॥

समाधत्ते—

नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥

अनेकलक्षणैरनेकस्वरूपै रूपरसादिभिस्तत्तदवयवैश्च विशिष्टस्यैकभावस्य निष्पत्तेरुत्पत्तेरित्यर्थः । तथा चैकस्य धर्मिणः प्रत्यक्षादिप्रमाणसिद्धत्वात् तस्य च चाक्षुषत्वरासनत्वादिविरुद्धधर्माध्यस्तरूपरसाद्यात्मकत्वाभावादवयवानां च कारणत्वात् कार्य्यकारणयोरभेदासम्भवाच्च न तत्तदात्मकत्वं घटादेः सम्भवतीति भावः ॥ ३५ ॥

हेतुमाह—

लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥

लक्षणस्यार्थाद्भावानां घटपटादीनां व्यवस्थानात्=व्यवस्थितत्वादेकत्वाप्रतिषेधः पृथक्त्वव्यवस्थापनं नेत्यर्थः । कपालसमवेतद्रव्यत्वादिकं हि घटादेर्लक्षणम् । कपाले घट इत्यादिप्रतीतिसिद्धम् । न चेदं समूहात्मकत्वे सम्भवति, एवं लक्षणस्य घटादिस्वरूपस्य यमहमद्राक्षं तमहं स्पृशामीति प्रत्यक्षेण व्यवस्थितत्वात् । परमाणोश्चाप्रत्यक्षत्वान्न तत्सम्भवः । किं च समूहलक्षणव्यवस्थितेरेव नोक्तं युक्तम् । समूहो हि नानाव्यक्तिसमुदायः, स च नैकव्यक्तेरनभ्युपगमे सिद्ध्यतीति भावः ॥ ३६ ॥

समाप्तं सर्वपृथक्त्वनिराकरणप्रकरणम् ॥ ६ ॥

सर्वशून्यत्वेन कार्य्यकारणभावासम्भव इति तन्निराकरणमारभते । तत्र ज्ञानविषयत्वमभावत्वव्याप्यं न वेति संशये पूर्वपक्षसूत्रम्—

सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥ ३७ ॥

सर्वं विवादास्पदमभावस्तुच्छं, तत्र प्रत्यक्षमानमाह—भावेष्विति । भावत्वाभिमतेषु घटादिषु अभावत्वसिद्धेः, घटः पटो नेत्यादिप्रतीत्या सर्वेषामभावत्वसिद्धेः ॥ ३७ ॥ *

* अत्र भाष्यकृत ऊहो द्रष्टव्योऽस्ति—तद्यथा—'प्रतिज्ञावाक्ये पदयोः प्रतिज्ञाहेत्वोश्च व्याघातादयुक्तम् = अनेकस्याशेषता सर्वशब्दस्यार्थो, भावप्रतिषेधश्चाभावशब्दस्यार्थः । पूर्वं सोपाख्यम्, उत्तरं निरुपाख्यम् । तत्र समुपाख्यायमानं कथं निरुपाख्यमभावः स्यादिति न जात्वभावो निरुपाख्यो अनेकतया=अशेषतया प्रतिज्ञातुमिति । सर्वमेतदभाव इति चेत्=यदिदं सर्वमिति मन्यसे तदभाव इति एवं चेद्, अनिवृत्तो व्याघातः, अनेकमशेषं चेति नाभावप्रत्ययेन शक्यं

सिद्धान्तसूत्रम्—

न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥

भावानां पृथिव्यादीनां स्वभावस्य गन्धादेः सत्त्वादेश्च सिद्धेः। नहि तुच्छस्य गन्धरूपादिकं, सत्वेन प्रतीतिर्वा सम्भवति ॥ ३८ ॥

---

भवितुम् । अस्ति चायं प्रत्ययः सर्वमिति, तस्मान्नाभाव इति। प्रतिज्ञाहेत्वोश्च व्याघातः—सर्वमभाव इति भावप्रतिषेधः प्रतिज्ञा, भावेष्वितरेतराभावसिद्धेरिति हेतुः, भावेष्वितरेतराभावमनुज्ञाय आश्रित्य च इतरेतराभावसिद्धौ सर्वमभाव इत्युच्यते। यदि सर्वमभावो, भावेष्वितरेतराभावसिद्धेरिति नोपपद्यते। अथ भावेष्वितरेतराभावसिद्धिः—न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥ न सर्वमभावः। कस्मात् ? स्वेन भावेन सद्भावाद्भावानाम्, स्वेन धर्म्मेण भावा भवन्तीति प्रतिज्ञायते। कश्च स्वो धर्म्मो भावानाम् ? द्रव्यगुणकर्मणां सदादिसामान्यं, द्रव्याणां क्रियावदित्येवमादि विशेषः, स्पर्शपर्यन्ताः पृथिव्या इति च प्रत्येकं चानन्तो भेदः। सामान्यविशेषसमवायानां च विशिष्टा धर्म्मा गृह्यन्ते। सोयमभावस्य निरुपाख्यत्वात्संप्रत्यायकोऽर्थभेदो न स्यात्। अस्ति त्वयं, तस्मान्न सर्वमभाव इति। अथवा न स्वभावसिद्धेर्भावानामिति स्वरूपसिद्धेरिति। गौरिति प्रयुज्यमाने शब्दे जातिविशिष्टं द्रव्यं गृह्यते नाभावमात्रम्। यदि च सर्वमभावः, गौरित्यभावः प्रतीयेत, गोशब्देन चाभाव उच्येत। यस्मात्तु गोशब्दप्रयोगे भावः प्रतीयते नाभावः, तस्मादयुक्तमिति। अथवा न स्वभावसिद्धेरिति—असन् गौरश्वात्मनेति गवात्मना कस्मान्नोच्यते. अवचनाद्गवात्मना गौरस्तीति स्वभावसिद्धिः। अनश्वोऽश्व इति वा गौरगौरिति वा कस्मान्नोच्यते। अवचनात् स्वेन रूपेण विद्यमानता द्रव्यस्येति विज्ञायते। अव्यतिरेके प्रतिषेधे च भावानाम्—असंयोगादिसम्बन्धो व्यतिरेकः। अत्राव्यतिरेकोऽभेदाख्यसम्बन्धः प्रत्ययसामानाधिकरण्यम्, यथा न सन्ति कुण्डे बदराणीति। असन् गौरश्वात्मना, अनश्वो गौरिति च गवाश्वयोरव्यतिरेकः प्रतिषिध्यते-गवाश्वयोरेकत्वं नास्तीति। तस्मिन् प्रतिषिध्यमाने भावेन गवा सामानाधिकरण्यमसत्प्रत्ययस्य असन् गौरश्वात्मनेति, यथा न सन्ति कुण्डे बदराणीति कुण्डे बदरसंयोगे प्रतिषिध्यमाने सद्भिरसत्प्रत्ययस्य सामानाधिकरण्यमिति ॥”

पुनः शङ्कते—

न स्वभावसिद्धिरापेक्षिकत्वात् ॥ ३९ ॥

नहि सर्वदा भावानामेकस्वभावः सम्भवति आपेक्षिकत्वात्=भिन्नत्वात्। भिन्नस्य एकस्वभावत्वे स्वस्मादपि भेदापत्तेः। यद्वा इतरसापेक्षत्वात्—एतदपेक्षयाऽयं नीलतरः, एतदपेक्षया ह्रस्व इति प्रतीतिः, यच्च सापेक्षं तदवस्तु, यथा जपासापेक्षं स्फटिकारुण्यम् ॥ ३९ ॥

समाधत्ते—

व्याहतत्वादयुक्तम् ॥ ४० ॥

सापेक्षत्वस्य तुच्छत्वव्याप्तेर्व्याहतत्वादसिद्धत्वात्। न वा घटादेः सापेक्षत्वं संभवति। किं च सापेक्षत्वं सापेक्षं न वा। आद्यस्य तुच्छत्वान्न साधकत्वम्। अन्त्ये तस्यैव सत्यत्वात् कुतः सर्वशून्यत्वमिति भावः ॥ ४० ॥

समाप्तं सर्वशून्यतानिराकरणप्रकरणम् ॥ १० ॥

---

अथ संख्यैकान्तवादनिराकरणप्रकरणम्, तत्र भाष्यम्—"अथेमे संख्यैकान्तवादाः; सर्वमेकं सदविशेषात्, सर्वं द्वेधा नित्यानित्यभेदात्, सर्वं त्रेधा ज्ञाता ज्ञेयं ज्ञानमिति सर्वं चतुर्धा प्रमाता प्रमाणं प्रमेयं प्रमितिरिति, एवं यथासम्भवमन्येऽपीति" ॥ तत्र यथा नित्यत्वानित्यत्वलक्षणधर्माभ्यां द्वैधं, तथा सत्त्वेनैक्यमिति स्पष्टोऽर्थः ॥ परे त्वेवं व्याचक्षते —एकमित्यद्वैतवादस्तथा च ब्रह्मैवैकं निर्विशेषसत्त्वं सर्वमन्यन्मिथ्या. यद्वा सर्वं प्रपञ्चजातम् एकं द्वैतशून्यं सदविशेषात्, घटः सन् पटः सन्निति प्रतीतेः, घटाभिन्नसदभिन्नपटस्य घटादभेदसिद्धेः; श्रुतिरपि 'एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन' इत्यादिः। 'अन्येऽपि इत्यनेन रूपसंस्कारवेदनानुभवाः पञ्च स्कन्धा इति सौत्रान्तिकाः इत्यादिसमुच्चयः। एतेष्वाक्षेपेषु सिद्धान्तसूत्रम्—

संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥ ४१ ॥

संख्यैकान्ता न सिद्ध्यति कारणस्य प्रमाणस्यानुपपत्तेः, उपपत्तौ वा न संख्यैकान्तः साधनस्य साध्यातिरिक्तस्यापेक्षितत्वात् ॥ ४१ ॥

आक्षिपति—

न कारणावयवभावात् ॥ ४२ ॥

न संख्यैकान्तस्यासिद्धिः कारणस्य प्रमाणस्यावयवभावात्, उक्तस्यैकदेशत्वादवयवावयविनोश्च भेदाभावादिति भावः ॥ ४२ ॥

दूषयति—

निरवयवत्वादहेतुः ॥ ४३ ॥

उक्तो हेतुर्न युक्तः सर्वस्यैव पक्षत्वेनावशिष्टस्याभावात् पक्षैकदेशस्य हेतुत्वासम्भवादिति भावः। श्रुतिस्तु ब्रह्मैक्यपरेति। एतच्च नास्मभ्यं रोचते सत्त्वेनैकस्य नित्यानित्यभेदात् द्वैविध्यादेश्चाभ्युपगतत्वादनित्यस्याप्यऽनुमानस्य नित्यत्वानित्यत्वसाधकत्वे विरोधाभावात्। तस्मादद्वैतवादनिराकरणपरत्व एव प्रकरणं सङ्गच्छत इति संक्षेपः ॥ ४३ ॥

समाप्तं संख्यैकान्तवादनिराकरणप्रकरणम् ॥ ११ ॥

---

अथावसरतः फले परीक्षणीये संशयमाह—

सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥ ४४ ॥

पाकादिक्रियायाः सद्यःफलकत्वस्य, कृष्यादेः कालान्तरफलकत्वस्य दर्शनाद् अग्निहोत्रहवनादेर्हिंसादेर्वा फलसाद्यस्कं कालान्तरीयं वेति संशयः ॥ ४४ ॥

तत्रैहिककीर्त्यादीनामेव फलत्वसम्भवे नाऽदृष्टादिकल्पनमिति पूर्वपक्षे सिद्धान्तसूत्रम्—

न सद्यः फलं कालान्तरोपभोग्यत्वात् ॥ ४५ ॥

कालान्तरोपभोग्यत्वेन प्रतिपादनादित्यर्थः। स्वर्गो हि फलं श्रूयते, स च दुःखासम्भिन्नसुखं, न चैहिकं सुखं तथा। एवं हिंसादेस्तत्तन्नरकोपभोगफलं श्रूयते, न चेह तत्सम्भव इति भावः ॥ ४५ ॥

शङ्कते—

कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥ ४६ ॥

कालान्तरेण तत्तत्कर्मणः फलं न सम्भवति हेतोस्तत्कर्मणो विनाशात् ॥ ४६ ॥

समाधत्ते-

प्राङ्निष्पत्तेर्वृक्षफलवत् तत् स्यात् ॥ ४७ ॥

स्वर्गादिनिष्पत्तेः प्राक् तत् द्वारं स्यात्। दृष्टान्तमाह—वृक्षफलवत्। यथा मूलसेकादिनाशेऽपि तदधीनावयवोपचयादिद्वारबलेन फलोत्पत्तिस्तथा प्रकृतेऽपि यागादिनाशेऽपि तज्जन्यादृष्टरूपद्वारसत्त्वान्न स्वर्गाद्युत्पत्तिविरोधः ॥ ४७ ॥

ननु कार्य्यकारणभाव एव न विचारसह इत्याशङ्कते—

नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात् ॥ ४८ ॥

प्राङ्निष्पत्तेरित्यनुवर्त्तते। फलमित्यध्याहर्तव्यम्। तथा चोत्पत्तेः प्राक् फलं नासत्, असत उत्पत्तौ शशशृङ्गादेरप्युत्पत्तिः स्यात्स्याच्च सिकतादावपि तैलं; न वा सत्, सत उत्पत्तिविरोधात्। अत एव न सदसत्, सदसतोः सत्त्वासत्त्वलक्षणवैधर्म्यात् ॥ ४८ ॥

समाधत्ते—

* [ प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा ]

उत्पादव्ययदर्शनात् ॥४९॥

उत्पत्तिधर्मकम् उत्पत्तिधर्मकत्वेनोपलभ्यमानं घटादिकमुत्पत्तेः प्रागसदिति अद्धा तत्त्वम् उत्पादनाशयोः प्रमितत्वात्। इदानीं पट उत्पन्न इदानीं पटो विनष्ट इति प्रत्ययात्, सतस्तु नोत्पत्तिसम्भव उत्पन्नस्य पुनरुत्पादप्रसङ्गात्, यद्यपि नाशस्य तत्र हेतुत्वं, तथाऽप्यनुत्पन्नभावस्य नाशायोगादुत्पादसाधकत्वेन नाश उक्तः ॥ ४९ ॥

असत उत्पत्तौ नियमो न स्यादित्यत्राह—

बुद्धिसिद्धं तु तदसत् ॥ ५० ॥

तत्कार्य्यम् असत्=प्रागभावप्रतियोगि बुद्धिसिद्धं=बुध्या विषयीकृतं; तथाहि इह तन्तुषु पटो भविष्यतीति ज्ञात्वा कुविन्दः प्रवर्त्तते न तु पटोऽस्तीति ज्ञात्वा। तथा सति सिद्धत्वेन ज्ञाते इच्छाऽभावात् प्रवृत्त्यनुपपत्तेः। सिकतादौ तु तैलं भविष्यतीति न ज्ञायते किन्तु न

---

* [ ] एतच्चिह्नान्तर्गतः पाठः न सूत्रगतः, अपि तु भाष्यावतरणिकेति न्यायसूचीनिबन्धादावस्यादर्शनादनुमीयते। केचित्तु—"प्रागु—द्धा" इति सूत्रमेवेत्याहुः।

भविष्यतीति ज्ञायत एव । कुत इति चेदनुभवं पृच्छ । किञ्च त्वन्मतेऽपि कुतो न ज्ञायते, तत्र पटाभावादिति चेत्कथमिदं निरणायि पटात् पूर्वं तन्तुसिकतयोस्तुल्यत्वात् तन्तुत्वेनाश्रयतेति चेत्तन्तुत्वेन कारणतेत्येव स्यात् प्रवृत्त्यनुरोधात् ॥ ५० ॥

नन्वस्तु हेतुफलभावस्तथापि वृक्षफलवदिति दृष्टान्तवैषम्यान्नादृष्टसिद्धिरित्याशयेन शङ्कते—

**आश्रयव्यतिरेकाद्वृक्षफलवदित्यहेतुः ॥ ५१ ॥**

प्राङ्निष्पत्तेर्वृक्षफलवदित्यहेतुः। कुतः? आश्रयव्यतिरेकात्। येन कायेन कर्म कृतं, तस्य नाशात्। वृक्षस्थले तु वृक्षस्य सत्त्वात् सलिलसेकादिकं परिकर्मोपयुज्यते इत्यभिमानः ॥ ५१ ॥

समाधत्ते—

**प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥**

आश्रयव्यतिरेकादिति हेतुर्न युक्तः प्रीतेः सुखस्य स्वर्गिशरीरावच्छेदेन जायमानस्यात्मवृत्तित्वाद्यागादिसामानाधिकरण्यादित्यर्थः ॥ ५२ ॥

क्वचित्सामानाधिकरण्यसम्भवेऽपि सर्वत्र न तथेति शङ्कते—

**न पुत्रस्त्रीपशुपरिच्छदहिरण्यान्नादिफलनिर्देशात् ॥ ५३ ॥**

पुत्रादीनां फलत्वेन निर्देशात् सामानाधिकरण्यं न सम्भवतीति भावः ॥ ५३ ॥

यद्यपि पुत्रादीनामैहिकफलत्वात्तत्रान्वयव्यतिरेकभावाच्छङ्कैव न, तथाऽपि यत्र जन्मान्तरीयधनादिकमपि फलं स्यात्, तत्रापि नानुपपत्तिरित्याशयेनाह—

*** तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः ॥ ५४ ॥**

* स्वर्गोऽपि तावत्स्वर्गतया न काम्यते किन्तु भोग्यतया, एवं सति कैव कथा पुत्रादिषु। तेऽपि भोग्यतयैव काम्यन्ते न तु स्वरूपं भोग्यमिति, तत्साध्यं सुखं भोग्यम् । तस्मात्पुत्रादिसंबन्धात्तदुत्पत्तेः सुखोत्पत्तेः तेषु यथा फलशब्दप्रयोगः तथा तेषु पुत्रादिष्वित्यर्थः। ( ता० टी० )

तत्सम्बन्धात्=पुत्रादिसम्बन्धात् फलनिष्पत्तेः=प्रीत्युत्पत्तेः तेषु पुत्रादिषु फलवदुपचारः=फलत्वेन व्यपदेशः, यथा अन्नं वै प्राणिनां प्राणा इति ॥ ५४ ॥

समाप्तं फलपरीक्षाप्रकरणम् ॥ १२ ॥

---

अथ क्रमप्राप्तं दुःखं परीक्षणीयं, तत्र च 'बाधनालक्षणं दुःखम्' इत्युक्तम्, तदर्थस्तु दुःखत्वजातिमत्त्वमित्युक्तं, तच्च शरीरादौ दुःखेऽव्याप्तमित्याशङ्कयाह—

* **विविधबाधनायोगाद्दुःखं जन्मोत्पत्तिः ॥ ५५ ॥**

जननयोगाद् जन्म शरीरादिकं, तदुत्पत्तिस्तत्सम्बन्धः विविधबाधनायोगाद् दुःखमिति व्यपदिश्यते। न तु वास्तवमेव तद् दुःखं, तथा च विविधदुःखानुषक्ततया हेयत्वार्थं दुःखमिति भावनीयमुपदिश्यते ॥ ५५ ॥

ननु दुःखभावेन किं सुखं प्रत्यादिश्यते, न चैतत् शक्यमत आह—

**सुखस्याप्यन्तरालनिष्पत्तेः ॥ ५६ ॥**

दुःखानां मध्ये सुखस्याप्युत्पत्तेस्तत्प्रत्याख्यानस्याशक्यत्वात् ॥५६॥

ननु सुखदुःखसम्बन्धाविशेषात् सुखभावनमेव किन्नेष्यत इत्यत आह—

† **बाधनानिवृत्ते र्निर्वेदयतः पर्य्येषणदोषादप्रतिषेधः ‡ ॥५७॥**

दुःखभावनस्य न प्रतिषेधः वेदयतः सुखसाधनत्वं जानतः पर्य्येषणदोषात् पर्य्येषणे सुखार्थं प्रवर्त्तने दोषात् सुखार्थं प्रवर्तमानो

---

* अत्र "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" ( योग० २।१५ ) इति सूत्रं तद्भाष्यं च द्रष्टव्यम् ॥

† न्यायसूची निबन्धे च 'बाधनानिवृत्तेः' इति पाठ उपलभ्यते।

‡ यस्मादिदं मे सुखसाधनमिति वेदयन् प्रार्थयते सुखसाधनम्। तच्च उक्ताद्बहुप्रकाराद् बाधनाहेतुरिति दुःखभावनयोपदेशनमिति। कामं काम्यं कामयमानस्य यदा कामः समृध्यति संपन्नो भवति। अथानन्तरमेनं पुरुषमपरः काम इच्छादिकं बाधते, स्वर्गादिप्राप्तावपि स्वराज्यादि कामयते, एवं तत्प्राप्तौ प्राजापत्यादीति अस्य इच्छातदुपायप्रार्थनादिना दुःखेन प्रबाधते इत्यर्थः ॥ ( ता० टी० )

हि अर्जनपालनादौ विविधाभिर्बाधनाभिरुपतप्यतेऽतो दुःखभावनं वैराग्यहेतुतयोपदिश्यते ॥ ५७ ॥

ननु दुःखमनुभवतः स्वत एव निवृत्तिसम्भवात् दुःखभावनोपदेशो व्यर्थ इत्यत आह—

* दुःखविकल्पे सुखाभिमानाच्च ॥ ५८ ॥

दुःखस्य विविधः कल्पो यत्र तादृशे प्रतिषिद्धहिंसाभोजनमैथुनादौ प्रवृत्तिर्माभूदित्ययमुपदेश इति भावः ॥ ५८ ॥

समाप्तं दुःखपरीक्षाप्रकरणम् ॥ १३ ॥

अथ क्रमप्राप्ततयाऽपवर्गः परीक्षणीयस्तत्र च तदर्थकप्रवृत्तिकालाभावात्तदभाव इति पूर्वपक्षयति—

ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५९ ॥

ऋणाद्यनुबन्धादपवर्गानुष्ठानकालाभावादपवर्गाभावः स्यात् । तथा च श्रूयते–"जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते, ब्रह्मचर्य्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः" इति । ऋषिभ्यः ऋषिऋणेभ्यः ब्रह्मचर्य्येण मुच्यते, देवेभ्यो=देवऋणेभ्यो यज्ञेन मुच्यते, प्रजया=ऽपत्येन पितृभ्यः=पितृऋणेभ्यो मुच्यते । ऋणापाकरणेनैव जीवनापगमस्तथा च श्रूयते 'यदेतत् सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च, जरया ह वा एष तस्माद्विमुच्यते मृत्युना च' इति । ऋणापाकरणमन्तरेण च न तत्र प्रवृत्तिः, तथा च स्मर्य्यते–"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः" ॥ एवं क्लेशानुबन्धादपि पुरुषो हि रागादिभिस्तत्तत्कर्माण्यारभमाणः क्लेशानुविद्ध एव दृश्यते, तत्कथमपवर्गः ? एवं प्रवृ-

---

* शास्त्रशिष्टानां विवेकिनां खलु विविधबाधनानुषङ्गाद् अनवयवेन सुखमात्रं दुःखमेवेति विनिश्चयो, अक्षिपत्रकल्पा हि ते । तद्यथैषीकतूलसंपर्कादप्यक्षिपात्रं दूयते न गात्रावयवान्तराणि, तथा मृदुचित्ततया विवेकिनो दूयन्ते, अविवेकिनस्तु प्रणयकलहकुपितकुरङ्गशावलोचनाङ्गनाऽलक्तकरसार्द्रपादपल्लवपातमपि शिरसि रहसि सुखमभिमन्यमाना घनपुलकाञ्चिततनवः सान्द्रानन्दाश्रुस्रुतनयना निर्वृण्वन्तीति, तान् प्रत्ययमुपदेशोऽर्थवानित्यर्थः ॥ ( ता० टी० )

त्यनुबन्धादपि पुरुषो हि वाग्बुद्धिशरीरैस्तत्तत्कर्माणि आरभमाणो धर्माधर्मौ यावज्जीवमुपार्जयन् कथमपवृज्यतामिति ॥ ५९ ॥

समाधत्ते-

प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ॥ ६० ॥

जायमान इत्याद्यनुवादो हि, न प्रधानशब्दः, नहि * जायमानः कर्मण्यधिक्रियते, तथा च भाष्यं—' यदा तु मातृतो जायते कुमारको, न तदा कर्मभिरधिक्रियते, अर्थिनः शक्तस्य चाधिकारात्'इति। जायमान इत्यनेन को वा व्यावर्तनीयः ? नह्यजातस्य प्रसक्तिरस्ति, येनासौ व्यावर्त्तनीयः, तथा च भाष्यं—' जायमान इति गुणशब्दो विपर्य्ययेऽनधिकारात्'इति । तथा च जायमान इत्यनेनोपनीत उच्यते तस्य ब्रह्मचर्य्यादावधिकारात्; अग्निहोत्रादौ च गृहस्थस्याधिकारः, ' क्षौमे वसानावग्नीयाताम् ' इति श्रुतेः। एवमृणशब्दोऽपि न मुख्यो, नह्यत्र प्रत्यादेयं कश्चन ददाति; परन्तु ऋणापाकरणवदावश्यकत्वख्यापनाय तथोक्तम्। लाक्षणिकशब्दप्रयोगे बीजमाह— निन्दाप्रशंसोपपत्तेः। ऋणानपाकरणतदपाकरणाभ्यामिवाग्निहोत्राद्यकरणतत्करणाभ्यां निन्दाप्रशंसे उपपद्येते, न चानुष्ठानकालाभावः ' जरया विमुच्यते ' इत्युक्तेः। न च जरयाऽशक्तिरुपलभ्यते 'अन्तेवासी वा जुहुयात् ब्रह्मणा हि स परिक्रीत ' इत्यादिनाऽशक्तस्याऽपि विधानात्तस्मादायुषश्चतुर्थभागो जरेत्युच्यते, किं च जाराममर्य्यवादः कामनाभिप्रायेण। तथा च भाष्यम्—'अर्थित्वस्य चापरि-

* अयमभिसन्धिः—विधिर्हि स्वव्यापारे कर्तृतया पुरुषं नियुङ्क्ते, प्रयत्नश्चास्य व्यापारः संभवति विषये न शक्यो निवर्तयितुमिति स्वविषयमपेक्षते, न चास्य साक्षात्फलं विषयो भवितुमर्हति। उद्देश्यतामात्रेण तु भवेत्। नैतावता प्रयत्नोऽस्य निर्वृणोति यावदयं साक्षादभिनिर्वर्त्तनीयं न प्राप्नोति। तदुपायस्य साक्षादभिनिर्वर्त्तनीय इति फलोद्देशप्रवृत्तस्य पुरुषप्रयत्नस्य निर्वृणोति यावदुपायो विषयः। न च बालकस्य तदुपायमविदुषस्तत्र सामर्थ्यमस्ति। असमर्थश्चाकर्त्ता कथमात्मानं प्रयत्नेन व्याप्नुयात्। अव्याप्नुवंश्च कथमधिकारीति जायमानशब्दो जघन्यवृत्तिरेव न्याय्य इति सिद्धम्। (ता० टी०)

आनन्त्यसम लक्षयति—

साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्य-
त्वप्रसंगादानित्यसमः ॥ ३२ ॥

यदि दृष्टान्तघटसाधर्म्यात् कृतकत्वात् तेन सह तुल्यधर्मतोपपद्यते इत्यतः शब्देऽनित्यत्वं साध्यते, तदा सर्वस्यैवानित्यत्वं स्यात् सत्त्वादिरूपसाधर्म्यसम्भवात्। न चेदमर्थान्तरग्रस्तमिति वाच्यं, सर्वस्याऽनित्यत्वे व्यतिरेकाग्रहादनुमानदूषणे तात्पर्य्यात्, परस्याऽन्वयव्यतिरेकिण एवानुमानत्वादित्याशयः। तथा च व्याप्तिमपुरस्कृत्य यत्किंचिद्दृष्टान्तसाधर्म्येण सर्वस्य साध्यवत्त्वापादानमनित्यसमा, साध्यपदादविशेषसमा, अतो व्यवच्छेदः, तत्र सर्वाविशेष एवापाद्यते, न तु सर्वस्य साध्यवत्त्वम्।

यत्तु अनित्यत्वेन समाऽनित्यसमेति भावप्रधानो निर्देशस्तथा च अन्वर्थलब्धमेव लक्षणमिति, तन्न वह्निमान् धूमादित्यादौ महानससाधर्म्यात् सत्त्वात् सर्वस्य वह्निमत्त्वं स्यादित्यस्या जात्यन्तरत्वापत्तेः। आचार्य्यास्तु "साधर्म्यं वैधर्म्यस्याप्युपलक्षकं, यथाकाशवैधर्म्यात् कृतकत्वाच्छब्दोऽनित्यस्तथाकाशवैधर्म्यादाकाशभिन्नत्वादितः सर्वमेवानित्यं स्याद्, इत्थं च लक्षणे यत्किंचिद्धर्मेणेत्येव वाच्यम्" इत्याहुः। अत्र च वैधर्म्यस्य विपक्षावृत्तित्वान्न सर्वस्य साध्यवत्त्वापादनं, किं त्वात्मादीनामप्यनित्यत्वं स्यादिति, तत्र चार्थान्तरमित्यवधेयम्। प्रतिकूलतर्कदेशनाभासा चेयम् ॥ ३२ ॥

साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः
प्रतिषेध्यसाधर्म्यात् ॥ ३३ ॥

यदि यत्किंचित्साधर्म्यात् सर्वस्य साध्यवत्त्वमापाद्यतस्तव साधर्म्यस्यासाधकत्वमभिमतं, तदा त्वत्कृतप्रतिषेधस्याऽप्यसिद्धिः, तस्याऽपि प्रतिषेध्यसाधर्म्येण प्रवृत्तत्वात्, त्वया ह्येवं साध्यते—कृतकत्वं न साधकं दृष्टान्तसाधर्म्यरूपत्वात् सत्त्वादिवत्, अयं च त्वदीयो हेतुः त्वत्प्रतिषेध्येन मदीयहेतुना कृतकत्वेन सत्त्वेन च सह साधर्म्यरूपस्तथा चाऽयमपि न साधकः स्यात् ॥ ३३ ॥

यदि च साधर्म्यमात्रम् न साधकमपितु व्याप्तिसहितमित्यभिमतं, तदा कृतकत्वे तदस्ति, न तु सत्त्व इति विशेष इत्याह—

**दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात् तस्य चोभयथाभावान्नाऽविशेषः ॥३४॥**

साध्यसाधनभावेन=व्याप्यव्यापकभावेन दृष्टान्ते प्रज्ञातस्य=प्रमितस्य धर्मस्य कृतकत्वस्य हेतुत्वात्=साधकत्वात् तस्य हेतुत्वस्य उभयथा अन्वयेन व्यतिरिकेण च भावात् मदीयहेतौ सत्त्वात् सत्त्वादिनाऽविशेष इति यदुक्तं तन्न भवति ॥ ३४ ॥

इति अनित्यसमप्रकरणम् ॥ १४ ॥

नित्यसमं लक्षयति—

**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥३५॥**

अनित्यस्य भावः अनित्यत्वं, तस्य नित्यं सर्वकालं स्वीकारे अनित्ये शब्दे नित्यत्वं स्यादित्यापादनं नित्यसमा। अयमाशयः—अनित्यत्वस्य नित्यत्वमस्वीकारे नित्यत्वाभावदशायां तस्याऽनित्यत्वं न स्यात्। नहि दण्डाभावदशायां दण्डीत्युच्यते, अतो अनित्यत्वं नित्यमेवास्तीत्यभ्युपगन्तव्यम्। तथा च शब्दस्याऽपि नित्यत्वापत्तिः, तेन बाधः सत्प्रतिपक्षो वा; तद्देशनाभासा चेयम्।

"एवमनित्यत्वं यदि नित्यं, कथं शब्दस्याऽनित्यतां कुर्य्यात्? नहि रक्तं महारजनं पटस्य नीलतां सम्पादयति। अथाऽनित्यं, तदा तदभावदशायामनित्यत्वं न स्यादित्यादिकमूह्यम्। एतदनुसारेण लक्षणमपि कार्य्यम्" इत्याचार्य्याः। वयं तु अनित्यस्य भावो धर्मस्तस्य नित्यमभ्युपगमेऽनित्यत्वेनाभ्युपगतस्य नित्यत्वं स्यात्, यथा क्षितिः सकर्तृकेत्यत्र अनित्यक्षितेर्धर्मः सकर्तृकत्वं त्वया क्षितौ नित्यमुपेयते, न वा; न चेत्, तदा साध्याभावादंशतो बाधः; अथ क्षितौ नित्यमेव सकर्तृकत्वमुपेयते, तदा क्षितेर्नित्यत्वं स्यादिति सकर्तृकत्वं विरुद्धम्। तद्देशनाभासा चेयमिति ब्रूमः ॥ ३५ ॥

अत्रोत्तरमाह—

**प्रतिषेध्ये नित्यमनित्यभावादनित्यत्वोपपत्तेः प्रतिषेधाभावः ॥ ३६ ॥**

प्रतिषेध्ये मत्पक्षे शब्दे सर्वदा अनित्यभावात्=अनित्यत्वात् अनित्ये शब्दे अनित्यत्वमुपपद्यते। नहि संभवति अनित्यत्वं नित्यम-

स्ति। अथ च तन्नित्यमिति व्याघातात्। न च नित्यमिति सर्वकालमित्यर्थः, तथा च शब्दस्यानित्यत्वे कथं सर्वकालमनित्यत्वसम्बन्ध इति वाच्यम्, सर्वकालमित्यस्य यावत्सत्त्वमित्यर्थात्। अतस्त्वत्कृतः प्रतिषेधो न संभवति।

मतान्तरे तु अनित्यत्वे नित्यत्वोपपत्तेर्हेतोस्त्वया यः प्रतिषेधः कृतः स न संभवतीत्यर्थः।

* [नित्यानित्यसमयोर्व्युत्क्रमेण लक्षणकरणे किं बीजमिति चेत्? इदमस्ति क्रमः, स नानर्थको, न चेह तथेति ज्ञापनार्थम्।] ॥ ३६ ॥

इति नित्यसमप्रकरणम् ॥ १५ ॥

प्रयत्नकार्य्यानेकत्वात्कार्य्यसमः ॥ ३७ ॥

प्रयत्नकार्यस्य = प्रयत्नेन संपादनीयस्य, अनेकत्वात् = अनेकविधत्वात्। अयमर्थः—शब्दोऽनित्यः प्रयत्ननान्तरीयकत्वादित्युक्ते प्रयत्ननान्तरीयकत्वं प्रयत्नकार्ये घटादौ प्रयत्नानन्तरोपलभ्यमाने कीलकादावपि दृष्टं; तत्र द्वितीयं न तज्जन्यत्वसाधकम्, आद्यं तु असिद्धं, तथा च सामान्यत उक्ते हेतावनभिमतविशेषनिराकरणेन प्रत्यवस्थानं कार्य्यसमा। असिद्धिदेशनाभासा चेयम्।

अथवा प्रयत्नकार्य्याणां = प्रयत्नकर्तव्यानां कर्तव्यप्रयत्नानामिति यावत्, तादृशानाम् अनेकविधत्वादुक्तान्यत् स्वव्याघातकमुत्तरं कार्य्यसमा। तथा चाऽस्या आकृतिगणत्वात् सूत्रानुपदर्शितानामपि परिग्रहः। यथा त्वत्पक्षे—किंचिद् दूषणं भविष्यतीति शङ्का पिशाचीसमा कार्य्यकारणभावस्योपकारनियतत्वेऽनवस्थेत्यनुपकारसमा इत्यादि ॥ ३७ ॥

अत्रोत्तरम्—

कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥

शब्दस्य कार्य्यान्यत्वे = अकार्य्यत्वे प्रयत्नस्य = वक्तृप्रयत्नस्य अहेतुत्वम् = अकारणत्वम्। इदं च तदा स्यात्, यद्यनुपलब्धिकारणमावरणादिकमुपपद्यते। न च तच्छब्देऽस्तीत्यर्थः। आकृतिगणपक्षे तु कार्याणां जातीनामन्यत्वे नानाविधत्वे, इदमुत्तरं प्रयत्नस्य

* [ ] एतच्चिह्नान्तर्गतः पाठो न सार्वत्रिकः।

त्वदीयदूषणप्रयत्नस्य अहेतुत्वम् = असाधकता=साधकत्वाभावः, उपलब्धेः कारणस्य=प्रमाणस्य=निर्दोषवाक्यस्य या उपपत्तिर्निर्दोषवाक्याधीनोपपादनं तदभावात्, तद्वाक्यस्य स्वपक्षव्याघातकत्वादित्यर्थः ॥ ३८ ॥

इति कार्यसमप्रकरणम् ॥ १६ ॥

एवं तावज्जातिवादिनं प्रति सर्वत्र सदुत्तरेणैवोद्धारः कार्य इत्यभिहितम्, तदेवाभिमतं; तेन निर्णयविजयफलकत्वं कथायां सम्पद्यते, असदुत्तरोद्भावने तु वन्ध्ययोः संयोगवन्नाभिमतफलसिद्धिरिति व्युत्पादयितुं कथाभासरूपां षट्पक्षीं शिष्यशिक्षायै प्रदर्शयति—

प्रतिषेधेऽपि समानो दोषः ॥ ३९ ॥

प्रयत्नानान्तरीयकत्वं न शब्दाऽनित्यत्वं साधयति अनैकान्तिकत्वादिति यो दोषः, स त्वत्पक्षेऽपि तुल्यः प्रयत्नाभिव्यङ्ग्यत्वस्याऽप्यसाधकत्वात्। अथवा अनैकान्तिकत्वादसाधक इति त्वया यः प्रतिषेधः कृतस्तत्राऽप्ययं दोषः समानः, नह्यनैकान्तिकत्वं सर्वस्यैवाऽसाधकत्वं साधयति स्वस्यैवाऽसाधकतासाधनत्वात् ॥ ३९ ॥

सेयं मतानुज्ञा किं कार्यसमायामेव, नेत्याह—

सर्वत्रैवम् ॥ ४० ॥

एवंविधमसदुत्तरं सर्वत्रैव जातौ संभवतीत्यर्थः। यथा शब्दोऽनित्यः शब्दत्वादित्यत्र नित्याकाशसाधर्म्यादमूर्त्तत्वान्नित्यः स्यादिति साधर्म्यसमायाम्, आकाशसाधर्म्यान्नित्यत्वे आकाशवच्छब्दे परममहत्त्वं स्यादित्युत्कर्षसमा। एवमन्यत्राप्यूह्यम्। यद्यप्ययमतिदेशः षट्पक्ष्यनन्तरमेव कर्तुमुचितस्तथाऽपि त्रिपक्ष्यादिकमपि सूचयितुमत्रैवोक्तः। उभयानुज्ञत्वबोधफला हि षट्पक्षी त्रिपक्ष्यादावपि तत्फलकत्वं तुल्यमिति भावः। तर्हि त्रिपक्ष्यामेव मध्यस्थेन पर्य्यनुयोज्योपेक्षणस्योद्भावने कथासमाप्तौ कुतः षट्पक्षीति चेन्न पुंसां स्फुरणवैचित्र्येण तत्संभवात् ॥ ४० ॥

प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥

तुल्यबलविरोधो विप्रतिषेधः। तथा च प्रतिषेधस्य यो विप्रतिषेधस्तत्र प्रतिषेधवद्दोष इत्यर्थः। तथाहि—शब्दोऽनित्यः प्रयत्नानान्तरीय-

कत्वादिति स्थापनावादिनः प्रथमः पक्षः। प्रयत्नकार्यानेकत्वात्कार्य्य-सम इति प्रतिवादिनो द्वितीयः पक्षः। प्रतिषेधेप्यनैकान्तिकत्वं तुल्यमिति वादिनः तृतीयः पक्षः। योऽयं विप्रतिषेधस्तत्राऽपि तथैवानैकान्तिकत्वं तत्समानदोषोद्भावनं वा चतुर्थः पक्षः ॥ ४१ ॥

पञ्चमं पक्षमाह—

**प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोष-प्रसंगो मतानुज्ञा ॥ ४२ ॥**

प्रतिषेधं द्वितीयं पक्षं सदोषमभ्युपेत्य तत्र मदुक्तं दोषमनुद्धृत्य प्रतिषेधविप्रतिषेधे मदीयपक्षे तृतीये समानं दोषं प्रसञ्जयस्तव मतानुज्ञानामकं निग्रहस्थानमित्यर्थः ॥ ४२ ॥

षष्ठं पक्षमाह—

**स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषा-भ्युपगमात्समानो दोषः ॥ ४३ ॥**

स्वपक्षः स्थापनारूपः प्रथमः पक्षः, तं लक्षीकृत्य प्रवृत्तो द्वितीयः पक्षः स्वपक्षलक्षणः, तस्याऽपेक्षा=समादरः, तत्र दोषानुद्भावनमिति फलितार्थः। तथा च मदीयपक्षे दोषमनुद्भाव्यैव स्वपक्षोपपादनं कर्तुं यस्त्वया हेतुर्निर्दिष्टः, 'प्रतिषेधेऽपि समानो दोष' इति वदतः तवा-ऽपि मतानुज्ञा वृत्तैवेत्यर्थः। तदेवं षट्पक्ष्यामुभयोरप्ययुक्तवादित्वा-दर्थासिद्धिः। यदि तु स्थापनावादी जातिवादिनं सदुत्तरेणैव दूष-यति, तदा षट्पक्षी न प्रवर्तत इति ॥ ४३ ॥

इति षट्पक्षीरूपकथाभासप्रकरणम् ॥ १७ ॥

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ
पञ्चमाध्यायस्याद्यमाह्निकम्।

अथेदानीं निग्रहस्थानविशेषलक्षणाभिधानम्, तदेव चाह्निकार्थः। अत्र च सप्त प्रकरणानि, तत्रादौ * प्रतिज्ञाहेत्वन्यतराश्रितनिग्रह-स्थानपञ्चकविशेषलक्षणप्रकरणम्। अन्यानि च यथास्थानं वक्ष्यन्ते तत्र † विशेषलक्षणार्थमादौ विभजते—

---

* 'न्यायाश्रित०' इति पाठान्तरम।

† 'विभागोद्देश्यसूत्रम्' इति पाठान्तरम।

**प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासः हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥**

अत्र चः त्वर्थे। तेन एतानि तु निग्रहस्थानानि, न पुनरपस्मारादिनाऽननुभाषणादिकं, न वा झटिति संवरणेन तिरोहिता च वाणीत्यर्थो लभ्यत इति प्राञ्चः। नव्यास्तु चकारोऽनुक्तसमुच्चये, तेन दृष्टान्ते साधनवैकल्यादीनां परिग्रहः ॥ १ ॥

तत्र क्रमेण प्रतिज्ञाहान्यादीनां लक्षणेषु वक्तव्येषु प्रथमोद्दिष्टां प्रतिज्ञाहानिं लक्षयति—

**प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥**

प्रतिकूलो दृष्टान्तो यत्र स प्रतिदृष्टान्तः=परपक्षः, स्वः=स्वीयो दृष्टान्तो यत्र स स्वदृष्टान्तः=स्वपक्षः, तथा च स्वपक्षे परपक्षधर्माभ्यनुज्ञा प्रतिज्ञाहानिः। स्वयं विशिष्याभिहितपरित्याग इति फलितार्थः। सिद्धान्तस्तु स्वयं विशिष्य नाभिधीयत इति नापसिद्धान्तसाङ्कर्यम्। सेयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात् पञ्चधा भवति। यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञया बाधितविषयोऽयमित्युत्तरिते अस्तु तर्हि घट एव पक्ष इति (१), एवं तत्रैव ऐन्द्रियकत्वादिति हेतोरनैकान्तिकत्वमिति प्रत्युक्ते अस्तु कृतकत्वादिति हेतुरिति (२); एवं पर्वतो वह्निमान् धूमादयोगोलकवदित्युक्ते दृष्टान्तः साधनविकल इति प्रत्युक्ते अस्तु तर्हि महानसवदिति (३)। एवम् अत्रैव सिद्धसाधनेन प्रत्युक्ते अस्तु तर्हि इन्धनवानिति (४)। अन्यहानिस्तु विशेषणहान्यादिः, यथा तत्रैव नीलधूमादित्युक्तेऽसमर्थविशेषणत्वेन प्रत्युक्तेऽस्तु तर्हि धूमादिति हेतुरित्यादिः (५) ॥ २ ॥

प्रतिज्ञान्तरं लक्षयति—

**प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥ ३ ॥**

प्रतिज्ञातस्याऽर्थस्य प्रतिषेधे कृते तद्दूषणोद्दिधीर्षया धर्मस्य

धर्मान्तरस्य विशिष्टः कल्पो विकल्पः तस्माद्विशेषणान्तरविशिष्टतया प्रतिज्ञातार्थस्य कथनमिति फलितार्थः। प्रतिषेध इत्यनेन झटिति संवरणे विलम्बेनाऽपि स्वयं दूषणं विभाव्य विशेषणे न दोष इत्युक्तं, प्रतिज्ञातार्थस्येत्युपलक्षणं, हेत्वतिरिक्तार्थस्येति तत्त्वम्। तेन उदाहरणान्तरमुपनयान्तरं निगमनान्तरं च प्रतिज्ञान्तरत्वेन संगृहीतं भवति। इदं च पक्षसाध्यविशेषणभेदात् प्रत्येकं द्विविधं यथा(१), शब्दो नित्य इत्युक्ते ध्वनौ बाधेन परेण प्रत्युक्ते वर्णात्मकः शब्दः पक्ष इति प्रतिज्ञान्तरम्। न चेदमर्थान्तरं प्रकृतोपयोगात्. न चेयं प्रतिज्ञाहानिः पूर्वोक्तस्याऽपरित्यागात्। (२) एवं पर्वतो वह्निमानसुरभिमलिनधूमवत्त्वादित्युक्ते असमर्थविशेषणत्वेन च परेण प्रत्युक्ते कृष्णागुरुप्रभववह्निमानित्यत्र। एवं तादृशवह्नौ साध्ये यः सुरभिमलिनधूमवान् स वह्निमानित्युदाहरणे न्यूनत्वेन प्रत्युक्ते स तादृशवह्निमानित्यत्र। एवमन्यदप्यूह्यम् ॥ ३ ॥

प्रतिज्ञाविरोधं लक्षयति—

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥

अत्र च प्रतिज्ञाहेतुपदे कथाकालीनवाक्यपरे। तथा च कथायां स्ववचनार्थविरोधः प्रतिज्ञाविरोधः। यद्यपि काञ्चनमयः पर्वतो वह्निमान्, पर्वतः काञ्चनमयवह्निमान्, ह्रदो वह्निमान् ह्रदत्वात्, पर्वतो वह्निमान् काञ्चनमयधूमादित्यादौ हेत्वाभासान्तरसाङ्कर्य्यं. तथाऽप्युपधेयसंकरेऽप्युपाधेरसांकर्य्यान्न दोषः। न चासंकीर्णस्थालाभावः पर्वतो वह्निमान् धूमात् यो यो धूमवान् स निरग्निरित्युदाहरणे निरग्निश्चायमित्युपनये च तत्सत्त्वात्। एवं निगमनेऽपि बोध्यम् ॥ ४ ॥

प्रतिज्ञासंन्यासं लक्षयति—

पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ॥ ५ ॥

पक्षस्य स्वाभिहितस्य परेण प्रतिषेधे कृते सति तत्परिजिहीर्षया प्रतिज्ञातार्थस्याऽपनयनमपलाप इत्यर्थः। यथा शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्ये व्यभिचारेण परेण प्रत्युक्ते क एवमाह शब्दोऽनित्य इति ॥ ५ ॥

हेत्वन्तरं लक्षयति—

अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥६॥

अत्र च हेतावित्यनेन न हेत्ववयवांशो विवक्षितः, अपि तु साध-

कांशः, स च हेत्ववयवस्थ उदाहरणादिस्थो वा; अविशेषोक्त इति पूर्वोक्त इत्यर्थः, विशेषमिच्छत इति साभिप्रायं, तेन परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ विशेषणान्तरप्रक्षेपोऽन्यहेतुकरणं वा, द्वयमपि हेत्वन्तरं; तथा च परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुत्वावच्छेदकविशिष्टवचनं हेत्वन्तरं, हेतौ विशेषणदान एव हेत्वन्तरमिति प्राञ्चः। पूर्वोक्तत्वं हेत्ववयवे उदाहरणादौ वा, यथा शब्दोऽनित्यः बाह्येन्द्रियप्रत्यक्षत्वादित्युक्ते सामान्येऽनैकान्तिकत्वेन च प्रत्युक्ते सामान्यवत्त्वे सतीति विशेषणम्। एवं विशिष्टहेतुमुक्त्वा यद्बाह्येन्द्रियप्रत्यक्षं, तदनित्यमित्युदाहरणे न्यूनत्वेन प्रत्युक्ते विशिष्टहेतौ, एवमुपनयविशेषणेऽपि ॥ ६ ॥

समाप्तं * प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणम् ॥१॥

अर्थान्तरं लक्षयति—

**प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम् ॥ ७ ॥**

प्रकृतात्=प्रकृतोपयुक्तात् ल्यब्लोपे पञ्चमी। तेन प्रकृतोपयुक्तमर्थमुपेत्याऽसम्बद्धार्थाभिधानम् अर्थान्तरम्। प्रकृतानाकाङ्क्षिताभिधानमिति फलितार्थः। यथा शब्दोऽनित्यः कृतकत्वादित्युक्त्वा शब्दो गुणः स चाऽऽकाशस्येत्यादि ॥ ७ ॥

निरर्थकं लक्षयति—

**वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥**

वर्णानां क्रमेण निर्देशो जबगडदशित्यादिप्रयोगस्तत्तुल्यो निर्देशो निरर्थकं निग्रहस्थानम्। अवाचकपदप्रयोग इति फलितार्थः। वाचकत्वं शक्त्या निरूढलक्षणया शास्त्रपरिभाषया वा बोध्यं। समयबन्धव्यतिरेकेणेति विशेषणीयम्। तेन यत्राऽपभ्रंशेन विचारः कर्त्तव्य इति समयबन्धः, तत्रापभ्रंशे न दोषः। झटिति संवरणे तु न दोषः इत्युक्तप्रायम्। अस्य च सम्भवः प्रमादादित इत्यवधेयम् ॥ ८ ॥

अविज्ञातार्थं लक्षयति—

**परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥ ९ ॥**

---

* "न्यायाश्रित०" इति पाठान्तरम्।

निरभिहितं वादिनेति शेषः। त्रिरभिधानं चानवधानादितोऽबोधनिरासाय परिषत्प्रतिवाद्यन्यतरेण विज्ञाते तु नाऽविज्ञातार्थमिति भावः। तथा च अवहिताविकलव्युत्पन्नपरिषत्प्रतिवादिबोधानुकूलोपस्थित्यजनकवाचकवाक्यप्रयोगोऽविज्ञातार्थमिति। वाचकेत्यनेन निरर्थकापार्थकव्युदासः। अत्र च पराज्ञानापादनेन मम जयो भविष्यतीति भ्रमादुक्तिसंभवः। न च यथाकथंचित् परो जेतव्य इत्यज्ञानापादनं न्याय्यमेवेति वाच्यं. तथा सति भङ्गकाले परमबुबोधयत्किंचिदभिधानेनैव सर्वत्र जयसंभवात्।

एतस्य त्रेधा संभवः असाधारणं तन्त्रमात्रप्रसिद्धं, यथा-पञ्चस्कन्धादयो बौद्धानां, तत्र रूपादयः पञ्चेन्द्रियाणि च रूपस्कन्धः, सविकल्पकं संज्ञास्कन्धः, रागद्वेषाभिनिवेशाः संस्कारस्कन्धः, सुखदुःखे वेदनास्कन्धः, निर्विकल्पकं ज्ञानस्कन्धः। द्वितीयमतिप्रसक्तयोगमनवेक्षितरूढिकं, यथा कश्यपतनयधृतिहेतुरयं त्रिनयनसमाननामधेयवान् तत्केतुमत्त्वादित्यादि। तृतीयं श्लिष्टं यथा-श्वेतो धावतीत्यादि। एवम् अतिद्रुतोच्चरितादिकमपीति भाष्यम्। अत्र नाऽऽद्यस्य सम्भवः, उभयतन्त्राभिज्ञमध्यस्थे सति उभयतन्त्राभिज्ञयोरेव विचारसम्भवादिति चेत्, सत्यं, तथाऽपि यत्र नैयायिकमीमांसकयोर्विचारे अन्यतरो बौद्धतन्त्रादिपरिभाषया वदति, तत्र निग्रह इत्याशयः। तत्राऽपि चेद्यथा कथञ्चित्परिभाषयोच्यतामिति परः प्रौढ्या वदति, तत्राऽऽद्यस्योपादानमिति, उत्तरयोस्तु न सर्वथैवेति ॥ ९ ॥

अपार्थकं लक्षयति—

**पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम् ॥ १० ॥**

पौर्वापर्य्यं=कार्य्यकारणभावस्तस्याऽयोगात्=असम्भवात्, शाब्दबोधजनकाकाङ्क्षाज्ञानाद्यभावादिति फलितार्थः। अप्रतिसंबद्धः= असंबद्धः. अर्थः=प्रयोजनं शाब्दबोधरूपं यत्र, यद्यपि दशदाडिमानि, षडपूपाः, कुण्डमजाजिनमित्यादाववान्तरवाक्यादर्थबोधसत्त्वादव्याप्तिरतिव्याप्तिश्च निरर्थके. तथाऽप्यभिमतवाक्यार्थबोधानुकूलाकाङ्क्षादिशून्यबोधजनकपदत्वं तत्, अविज्ञातार्थे तु स्वस्य बोधो भवत्येवेति नाऽतिव्याप्तिः। उदाहरणं तु अयोग्यानासन्नानाकाङ्क्षवाक्यम् ॥१०॥

समाप्तमभिमतवाक्यार्थाप्रतिपादकनिग्रहस्थानचतुष्टयप्रकरणम् ॥२॥

अप्राप्तकालं लक्षयति—

**अवयवविपर्य्यासवचनमप्राप्तकालम् ॥ ११ ॥**

अवयवस्य=कथैकदेशस्य, विपर्यासो=वैपरीत्यम्। तथा च समयबन्धविषयीभूतकथाक्रमविपरीतक्रमेणाऽभिधानं पर्य्यवसन्नं; तत्राऽयं क्रम—वादिना साधनमुक्त्वा सामान्यतो हेत्वाभासा उद्धरणीया इत्येकः पादः, प्रतिवादिनश्च तत्रोपालम्भो द्वितीयः पादः, प्रतिवादिनः स्वपक्षसाधनं तत्र हेत्वाभासोद्धरणं चेति तृतीयः पादः, जयपराजयव्यवस्था चतुर्थः पादः। एवं प्रतिज्ञाहेत्वादीनां क्रमः, तत्र सभाक्षोभव्यामोहादिना व्यत्यस्ताभिधानमप्राप्तकालमिति ॥ ११ ॥

न्यूनं लक्षयति—

**हीनमन्यतमेनाऽप्यवयवेन न्यूनम् ॥ १२ ॥**

अवयवेन स्वशास्त्रसिद्धेन तेन, सौगतस्य द्व्यवयवाभिधानेऽपि न न्यूनत्वम्। नन्ववयवहीनत्वं अवयवत्वावच्छिन्नाभावः, तथा चाऽकथनमेव स्यादत आह—अन्यतमेनाऽपीति। तथा च यत्किंचिदवयवशून्यावयवाभिधानं फलितम्। न चाऽयमपसिद्धान्तः सिद्धान्तविरुद्धानभ्युपगमात्; अपि तु सभाक्षोभादिनाऽनभिधानात् ॥ १२ ॥

अधिकं लक्षयति—

**हेतूदाहरणाधिकमधिकम् ॥ १३ ॥**

हेतूदाहरणेत्युपलक्षणम्। दूषणाद्याधिक्यमपि बोध्यम्। तथा च कृतकर्त्तव्यापुनरुक्ताभिधानमिति फलितम्। अनुवादस्तु न कृतकर्त्तव्यः साभिप्रायत्वात्। प्रतिज्ञाधिक्यं च (न) पुनरुक्तं, धूमादालोकात् महानसवच्चत्वरवदित्यादिकं तु विना समयबन्धं दार्ढ्यादिभ्रमादुक्तमधिकम्। यथा महानसं महानसवदिति तु नाऽधिकं, किंतु पुनरुक्तम् ॥ १३ ॥

समाप्तं स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणम् ॥ ३ ॥

---

पुनरुक्तं लक्षयति।

**शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्राऽनुवादात् ॥ १४ ॥**

पुनर्वचनं=पुनरुक्तं। तस्य विभागार्थं शब्दार्थयोरिति। तेन शब्दपुनरुक्तमर्थपुनरुक्तं च लभ्यते। अनुवादेऽतिव्याप्तिवारणायान्यत्रानुवादादिति, अनुवादादन्यत्वे सतीत्यर्थः।

निष्प्रयोजनं पुनरभिधानं हि पुनरुक्तम्। अनुवादस्तु व्याख्यारूपः सप्रयोजनक एवेति भावः। तथा च समानार्थकसमानानुपूर्वीकशब्दप्रयोगः शब्दपुनरुक्तम्। समानार्थकभिन्नानुपूर्वीकशब्दस्य निष्प्रयोजनं पुनरभिधानमर्थपुनरुक्तम्। आद्यं यथा घटो घट इति, द्वितीयं यथा-घटः कलश इति। एतस्य प्रमादादिना संभवः ॥ १४ ॥

पुनरुक्तप्रभेदान्तरमाह—

**अर्थादापन्नस्य स्वशब्देन पुनरभिधानम् * ॥ १५ ॥**

पुनरुक्तमित्यनुवर्तते। यस्मिन्नुक्ते यस्यार्थस्यौत्सर्गिकी प्रतिपत्तिर्भवति, तस्य तेन रूपेण पुनरभिधानं पुनरुक्तम्। इदमेव च अर्थपुनरुक्तमिति गीयते। यथा वह्निरुष्ण इति पूर्वपदाक्षिप्तोक्तिरियम्, उष्णो वह्निरिति उत्तरपदाक्षिप्तोक्तिः, एवं वह्निरस्ति गेहे नाऽस्तीति विध्याक्षिप्तोक्तिः, जीवन् गेहे नाऽस्ति बहिरस्तीति निषेधाक्षिप्तोक्तिः पुनरुक्तवैचित्र्यं चेदं भाष्यादिसंमतम्। अन्ये तु शब्दपुनरुक्तं द्विविधं, तस्यैव शब्दस्य पुनरभिधानं पर्य्यायेणाऽभिधानं अन्यत्पुनरर्थपुनरुक्तमित्याहुः ॥ १५ ॥

इति पुनरुक्तप्रकरणम् ॥ ४ ॥

---

अननुभाषणं लक्षयति—

**विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ॥ १६ ॥**

परिषदा विज्ञातस्य विशिष्य बुद्धार्थस्य वादिना त्रिरभिहितस्य, तथा च प्रथमवचनेऽननुभाषणे वादिना वारत्रयं वाच्यमिति दर्शितम्। तथा च त्रिरभिधानेऽपि यत्राऽनुभाषणविरोधी व्यापारःतत्राऽननुभाषणं निग्रहस्थानमित्यर्थः। "अज्ञानसांकर्य्यनिरासाय अज्ञानमनाविष्कुर्वतेति विक्षेपसांकर्य्यनिरासाय कथामविच्छिन्दतेति च विशेषणीयम्" इत्याचार्य्याः। न चाऽप्रतिभासांकार्य्यम् उत्तरप्रतिप

---

* कालिकातामुद्रितभाष्यपुस्तके "पुनर्वचनम्" इति पाठः। न्यायसूचीनिबन्धे, न्यायवार्त्तिके च "पुनर्वचनं पुनरुक्तम्" इति पाठः। कालिकातामुद्रितभाष्यपुस्तके "अनुवादे त्वपनुरुक्तं शब्दाभ्यासादर्थविशेषोपपत्तेः" इति एकमधिकं सूत्रं, वार्त्तिकेऽपि अस्तीदं सूत्रं, परन्तु तत्र "शब्दाभ्यासाद्" इति पदं नास्ति।

त्तावपि सभाक्षोभादिनाऽननुभाषणसंभवात्। तदिदं चतुर्धा एक-देशानुवादाद्विपरीतानुवादात् केवलदूषणोक्त्या स्तम्भेन चेति। "सर्वनामपदेनऽनुवादात्पञ्चमम्" इत्याचार्य्याः। क्वचिदज्ञानाप्रति-भाननुभाषणसांकर्य्ये यन्निश्चेतुं शक्यते तदेवोद्भाव्यम्॥ १६॥

अज्ञानं लक्षयति—

अविज्ञातं चाऽज्ञानम्॥ १७॥

भावे क्तः, चकारश्च 'परिषदा विज्ञातस्य' इत्याद्यनुकर्षणार्थः, तथा-च परिषदा विज्ञातस्य वादिना त्रिरभिहितस्याऽप्यविज्ञातमित्यर्थः। इदं किं वदसि बुध्यत एव नेत्याद्याविष्करणेन ज्ञातुं शक्यत इति॥१७॥

अप्रतिभां लक्षयति—

उत्तरस्याऽप्रतिपत्तिरप्रतिभा॥ १८॥

उत्तरार्हेण परोक्तं बुद्ध्वाऽपि यत्रोत्तरसमय उत्तरं न प्रतिपद्यते, तत्राऽप्रतिभा निग्रहस्थानं न चाऽत्राऽननुभाषणस्याऽवश्यकत्वात् तदेव दूषणमस्त्विति वाच्यं, परोक्ताननुवादे हि तत्, यत्र परोक्त-मनूद्याऽपि नोत्तरं प्रतिपद्यते, तत्राऽसांकर्य्यात्। ससूचनश्लोकपा-ठाद्युन्नेया चेयम्॥ १८॥

विक्षेपं लक्षयति—

कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः॥ १९॥

कार्य्यव्यासङ्गात् कार्य्यव्यासङ्गमुद्भाव्येत्यर्थः ल्यब्लोपे पञ्चमी। कार्य्यव्यासङ्गश्चासंभवत्कालान्तरकत्वेनाऽऽरोपितः, तेन तादृश-कथाविच्छेदो विक्षेपः। तेन राजपुरुषादिभिराकारणे गृहजनादिभिर्वा-ऽऽवश्यककार्य्यार्थमाकारणे स्वगृहदाहादिकं पश्यतो गमने वास्तव-शिरोरोगादिना प्रतिबन्धे वा न विक्षेपः। ननु कार्य्यव्यासङ्गोद्भाव-नं कुतः? सभाक्षोभादिना चेद्, अननुभाषणमेव, उत्तराप्रतिभैवेति चेन्न उत्तरावसराभावात्। वस्तुतस्तूत्तरस्फूर्तावपि तद्दूषणसम्भाव-नया विक्षेपसंभवात्, यथा क्षिति सकर्तृका कार्य्यत्वादित्युक्ते अत्राङ्कुरे व्यभिचारस्तावन्मयोद्भाव्यस्तत्र चेदयं पक्षसमत्वं ब्रूयात्तदा मे किमुत्तरमतोऽत्र महार्णवलिखितं मया च विचारितं, किंचित् कार्यमुद्भाव्य गृहे गत्वा दृश्यते इत्येवं विक्षेपसंभवात्॥ १६॥

इति उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम्॥ ५॥

मतानुज्ञां लक्षयति—

स्वपक्षे दोषाभ्युपगमात् परपक्षे
दोषप्रसंगो मतानुज्ञा ॥ २० ॥

दोषाभ्युपमाद्दोषमनुद्धृत्येत्यर्थः। यथा शब्दो नित्यः श्रावणत्वादित्युक्ते ध्वनावनैकान्तिकत्वेन हेत्वाभासोऽयमित्युक्तौ शब्दोऽनित्यः कृतकत्वादिति साधिते ध्वनेरपि पक्षसमत्वान्न दोष इत्युक्तौ; असिद्धत्वात् तवाऽपि हेत्वाभासोऽयमित्युक्तौ सोऽयं मतानुज्ञया निगृहीतः स्यात्। 'अप्रतिषिद्धमनुमतं भवति' इति स्वपक्षे दोषाभ्युपगमात्॥२०॥

पर्य्यनुयोज्योपेक्षणं लक्षयति—

निग्रहस्थानप्राप्तस्याऽनिग्रहः
पर्य्यनुयोज्योपेक्षणम् ॥ २१ ॥

निग्रहस्थानं प्राप्तवतोऽनिग्रहः=निग्रहस्थानानुद्भावनमित्यर्थः। यत्र त्वनेकनिग्रहस्थानपाते ह्येकतरोद्भावनं, तत्र न पर्य्यनुयोज्योपेक्षणम्, अवसरे निग्रहस्थानोद्भावनत्वावच्छिन्नाभावस्यैव सत्त्वात्। ननु वादिना कथमिदमुद्भाव्यं स्वकौपीनविवरणस्याऽयुक्तत्वादिति चेत्, सत्यं मध्यस्थेनैवेदमुद्भाव्यं, वादे च स्वयमुद्भावनेऽप्यदोषः॥२१॥

निरनुयोज्यानुयोगं लक्षयति—

अनिग्रहस्थाने निग्रहस्थानाभियोगो
निरनुयोज्यानुयोगः ॥ २२ ॥

अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यन्निग्रहस्थानोद्भावनं तदित्यर्थः। एतेनाऽनवसरे निग्रहस्थानोद्भावने एकनिग्रहस्थाने निग्रहस्थानान्तरोद्भावने च नाऽव्याप्तिः। सोऽयं चतुर्धा छलं जातिराभासोऽनवसरग्रहणं च। आभासो व्यभिचारादावसिद्ध्याद्युद्भावनम्। अनवसरग्रहणं चाऽकाले एवोद्भावनं यथा त्यजसि चेत् प्रतिज्ञाहानिर्विशेषयसि चेद्धेत्वन्तरम्; एवमवसरमतीत्य कथनमपि, यथा उच्यमानग्राह्यस्यापशब्दादेः परिसमाप्तौ, एवमनुक्तग्राह्याज्ञानाद्यननुभाषणावसरेऽनुद्भाव्यबोधाविष्करणानुभाषणप्रवृत्ते वादिनि तदुद्भावनमित्यादिकमूह्यम्॥ २२॥

समाप्तं दोषनिरूप्यनिग्रहस्थानत्रिकप्रकरणम्॥ ६॥

अपसिद्धान्तं लक्षयति—

**सिद्धान्तमभ्युपेत्याऽनियमात्**
**कथाप्रसङ्गोऽपसिद्धान्तः ॥ २३ ॥**

सिद्धान्तं = स्वशास्त्रकाराभ्युपगतमर्थं स्वीकृत्याऽऽनियमात् तन्नियमप्रच्यवात् कथाप्रसङ्ग इति। तथा च कथायां स्वीकृतसिद्धान्तप्रच्यवोऽपसिद्धान्तः, तथा च सांख्यमतेनाऽहं वदिष्यामीत्यभ्युपेत्याऽऽरब्धायां कथायाम् आविर्भावस्याऽऽविर्भावाभ्युपगमेऽनवस्थेति दूषणोद्धारायाऽऽविर्भावस्याऽसत उत्पत्तिं यद्यभ्युपैति, तदाऽपसिद्धान्तः। यस्त्वेकदेशिमते कथामारभते, तस्य शास्त्रकाराभ्युपगमविरोधो नाऽपसिद्धान्त इति बोधयितुमभ्युपेत्येत्युक्तम्। सौगतास्त्वपसिद्धान्तं दूषणं न मन्यन्त इत्यन्यदेतत् ॥ २३ ॥

क्रमप्राप्ते हेत्वाभासलक्षणे वक्तव्ये तदकथने बीजमाह—

**हेत्वाभासाश्च यथोक्ताः ॥ २४ ॥**

चः पुनरर्थे। हेत्वाभासाः पुनर्यथा=येन रूपेण पूर्वमुक्तास्तेनैव रूपेण तेषां निग्रहस्थानत्वमिति, न लक्षणान्तरमपेक्षितमिति। अत्र चकारस्य दृष्टान्ते साधनवैकल्यादिसमुच्चायकत्वमिति केचित्, तन्न यथोक्ता इत्यस्याऽनन्वयापत्तेरिति ॥ २४ ॥

इति कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम् ॥ ७ ॥

( समाप्तं निग्रहस्थानविशेषलक्षणम्। )

समाप्तं च पञ्चमाध्यायस्य द्वितीयमाह्निकम् ॥

एषा मुनिप्रवरगोतमसूत्रवृत्तिः
श्रीविश्वनाथकृतिना सुगमाऽल्पवर्णा।
श्रीकृष्णचन्द्रचरणाऽम्बुजचञ्चरीक-
श्रीमच्छिरोमणिवचःप्रचयैरकारि।

इति श्रीमन्महामहोपाध्यायश्रीमद्विद्यानिवासभट्टाचार्यात्मजश्रीविश्वनाथभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ पञ्चमोऽध्यायः समाप्तः ॥

॥ समाप्तेयं सूत्रवृत्तिः* ॥

* "समाप्तं चेदं शास्त्रम्" इति पाठान्तरम्

# विविधग्रन्थानुसारेण न्यायसूत्रसंख्योपदर्शकं चक्रम् ।

| | १ अध्याये | | २ अध्याये | | ३ अध्याये | | ४ अध्याये | | ५ अध्याये | | समुदित० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| | १ | २ | १ | २ | १ | २ | १ | २ | १ | २ | |
| वृत्तिसम्मतसूत्रसंख्या | ४१ | २० | ६८ | ६७ | ७२ | ७३ | ६८ | ४९ | ४३ | २४ | ५२५ |
| न्यायसूचीनिबन्ध० | ४१ | २० | ६८ | ६९ | ७३ | ७२ | ६७ | ५१ | ४३ | २४ | ५२८ |
| न्यायसूत्रोद्धार० | ४१ | २० | ६८ | ६६ | ७३ | ७७ | ६८ | ५१ | ४३ | २४ | ५३१ |
| कालिकाता मुद्रितन्यायभाष्य० | ४१ | २० | ६७ | ७१ | ७५ | ७८ | ६८ | ५० | ४३ | २५ | ५३८ |
| न्यायवार्त्तिक० | ४१ | २० | ६९ | ७७ | ७२ | ७३ | ६९ | ५१ | ४३ | २५ | ५३३ |

अस्माच्चक्रादनायासमेव ज्ञायते, यद्बहवः आचार्याः सूत्रव्यवस्थापने प्रवृत्ता अपि न नापारयन् व्यवस्थापयितुम् । कोनामाऽस्मादृशः अस्मिन् सर्वथा दुःशके कार्ये अध्यवस्येत् । अस्माद् सूत्रसंख्याभेदादेवास्य शास्त्रस्यातिप्राचीनत्वमप्यनुमीयते । कालवशात् अस्य शास्त्रस्य प्रचारः वैरल्यमाप । अधुना अस्य पुनश्चर्चा प्रारब्धा, मन्ये सत्वरमेवास्योद्धारो भविष्यत्येव । शम् ।

Printed by G. K. Gurjar at Shri Lakshmi Narayan Press, Benares City
and Published by Hari Krishna Dass Gupta, Proprietor—
"Gupta Book Depot" Kachaurigalli, Benares City.

श्रीः

श्रीमत्पण्डितप्रवरश्रीबालकृष्णमिश्रप्रणीता

# न्यायसूत्रवृत्तेर्विषमस्थलतात्पर्यविवृतिः ।

नवीनविलसत्प्रभश्रितबलाककादम्बिनी
विडम्बनसितोरगस्रगतिदीप्तदेहद्युतिः ।
पिशङ्गफणिसङ्गिनी शिरसि यौवनोद्भासिनी
मनागपि मदन्तरे स्फुरतु धूर्जटेः कामिनी ॥ १ ॥
तीरभुक्तिक्षितिभृता श्रेयोवल्लीभवेन यः ।
श्रीरमेश्वरसिंहेन दयादृष्ट्या निरीक्ष्यते ॥ २ ॥
तेन तद्देशजातेन सदन्वयविभास्वता ।
श्रीबालकृष्णमिश्रेण श्रोत्रियेण विधीयते ॥ ३ ॥
व्याख्यायां विश्वनाथस्य निखिले विषमस्थले
प्राचीनोक्तीस्समालोच्य तात्पर्यविवृतिर्नवा ॥ ४ ॥
आशास्यतेऽतिसुलभं प्रमादं मर्त्यजन्मिनाम्
निजयुक्तिवचःपूरैः समाधास्यन्ति साधवः ॥ ५ ॥

पृष्ठे १ । पंक्तिः १ ।

प्रारिप्सितन्यायसूत्रवृत्तिसमाप्तिसपत्नान्तरायसन्ततिशान्तिकामुकस्वान्तेनाम्नायमानानि मानवीयस्त्वात्ममङ्गलानि स्वान्तेवासिनामनुशासनाय निबन्धावयवयति,— वपुरित्यादि । वपुषो लीला लक्ष्म्या, लीलया लक्ष्म्या वा, मदनमेव पराजेतुं व्यधायि रासक्रीडा भगवतेति तोषिणीसारे प्रतिपादनात् । एतेन चानुभावेन सकलाधिककान्तकामविजयिशोभाश्रयत्वेन निरतिशयरामणीयकमसंलक्ष्यक्रमतया प्राधान्येन ध्वन्यमानश्रीकृष्णालम्बनविभावरत्यात्मककविश्रितभावस्योद्दीपनविषयाकृतया किंपदार्थलोकोत्तरत्वसिद्ध्यङ्गतया च गुणीभूतं व्यज्यते । द्वितीयपक्षे पुरोदीरिताश्रयत्वेन समं कामजेतृलीलत्वञ्च तदेव लोकोत्तरत्वं सावयवमभिहितामेव रतिमुद्दीपयति, तेन च नापुष्टार्थता । जनानां, नतु जनस्य । कमपि, विशेषतः शब्देन नि-

द्रष्टुमशक्यम्। विरचयन्नित्यत्र लटा वर्तमानत्वमविवक्षितं, नातो योग्यताविरहः। दृश्यते च स्तोकं स्थीयत इत्यादौ। तदविवक्षायामपि लटस्साधुत्वं व्युत्पत्तिवादे व्युत्पादितम्। ः=प्रसिद्धः, एतेन नात्र यत्पदस्यापेक्षा, प्रपञ्चितमेतन्निजरचितलक्ष्मीश्वरीचरितव्याख्याया-मस्माभिः। प्रथयतु = तनोतु, नतु जनयतु, भक्तिमात्रस्य सिद्धत्वात्। **त्रिलोकीलोकानां** = त्रिभुवनवर्तिजनानां, मनांस्येव मन्दिराणि तत्र चरः, सर्वान्तर्यामीत्यर्थः। सजलजलदस्येव श्यामलातनुर्यस्य, सः, नतु सजलजलद इवेति, साधारणधर्मशब्दे लिङ्गविपरिणामस्याव-श्यकतयाऽधिविग्रहमुपमालङ्कृतौ भग्नप्रक्रमत्वदोषो हि प्रसज्येत। झटिति फलदातृत्वं स्वतस्सम्भविनाऽलङ्कारेण वस्तु व्यज्यत इति संक्षेपः॥ १॥

पृष्ठे १। पंक्तिः ५।

**संयुक्तामिति**। नखानामनेकतया परस्परं सम्पृक्तामित्य-र्थः। तेन तत्कान्तीनामैक्येन प्रतिभासनात् 'भासेति' 'नख-रुचम्'इत्येकवचनमपि सङ्गच्छते। अनेन चाङ्गुलीनामविरलत्वं, तेन च रुचिरत्वं द्योत्यते। युक्तं = समीचीनं, रूपं=वर्णः, स्वरूपं वा यस्यास्ताम्। युक्तेन योगिना 'रूप्यते, निरुप्यत इति तथेति वा। अभिख्यां=कान्तिम्। आलक्तकरक्तागुणग्रहणेन तद्गुणेन कान्तेरति-स्वच्छत्वं गम्यते। चूर्णयन्तीम् = अपकृष्यन्तीम्, मुख्यार्थस्य बाधनात् अतोऽपकर्षातिशयोऽत्यन्ततिरस्कृतवाच्यध्वनिः। व्यतिरेकप्रतियोगि-नोऽमृतकिरणकान्तित्वेन बोधनाल्लोकोत्तराह्लादकत्वं नखरुचि प्रती-यते। तत्पदोपादानमप्यत एव युक्तम्। **शिरोरम्येति**, सम्पृक्ततया शिरसो रम्येत्यर्थः पुंसि नियतत्वेन विशेषपदस्य न विशेष्यपदपारव-श्यम्। त्रिपुरहरशिरसो नम्रत्वोक्त्या देव्यां माहात्म्यातिशयो व्यज्यते। तेन च तत्पदाभिधानमपि सफलम्। तथा चोक्तेन विप्रलम्भश्रृङ्गारेण च व्यङ्ग्यार्थेनानुप्राणिता भवानी विषयिणी कविनिष्ठा रतिर्भावः प्राधान्येन ध्वन्यते। अत्र शिवाया इत्येव पाठो युक्तो, न तु भवान्या इति, विभिन्नपदाभ्यां शिवस्य बोधने शब्दस्यापि स्वजन्यबोधविषय तायां आलङ्कारिकाङ्गीकृतत्वेन भवत्रिपुरहरयोर्वैरूप्यप्रतीतौ त्रिपुरहर-स्योपपतित्वव्यञ्जनेन भावापकर्षप्रसङ्गादिति समालोचयन्तु साहि-त्यरसिका इति॥ २॥

पृष्ठे १। पंक्तिः ६।

तर्कशास्त्रप्रणेतृत्वेन समुचितं महर्षिगौतमं नमस्यति—यदीयेति। यदीयैस्तर्कैः प्रकाशकत्वात्किरणरूपैरान्तरध्वान्तस्य अज्ञानस्य, सन्ततिः=समुदायं, तरन्ति=कार्याक्षमं कुर्वन्ति। भास्वन्तं=प्रकाशमानम्, एतेन दिवाकरापेक्षया व्यतिरेको बोध्यते। तस्यान्तरध्वान्तनिवारणेऽसामर्थ्यात् भासमानत्वस्योभयसाधारण्याच्च। नमामीत्यत्र स्वनिष्ठापकर्षेण स्वावधिकोत्कर्षेण वा ज्ञापनं धातुरभिधत्ते, द्वितीया चावधिमत्त्वं विषयित्वं वा। तपोतिशयप्रभावादसावक्षपादतां लेभ इति पौराणिकी कथा॥ ३॥

पृष्ठे १। पंक्तिः ११।

अथ पितरं प्रशस्यन् नमस्करोति,–अद्वैतमिति। गुरुधर्मयोः। गृणाति=उपदिशतीति गुरुरिति समाख्ययोपदेष्टृधार्मिकयोः। अद्वैतमिव=स्वसदृशापररहिततया सम्भावनाविषयम्। सा चौत्कट्याभिधायाः सम्भावयामीतिप्रतीतिसिद्धाया विषयताया निरूपकःसन्देहः। तसन्त्याः=दमामण्डल्या मण्डनं=भूषणं, नतु कस्य चनैकजनपदस्य। गिरो=वाण्याः, प्रागल्भ्यस्य=प्रौढेः, सम्पादकं किञ्चन विलक्षणं पौरुषं रूपमिव, स्वरूपतयोत्प्रेक्ष्यमाणं, योषित्त्वे प्रागल्भ्यस्याभावात्तदास्पदयितुमेतद्रूपेणावततारेव वाग्देवीत्याशयः। उत्प्रेक्षया सर्वविलक्षणापेक्षया वैदुष्याधिक्यं व्यङ्ग्यम्। दयया=स्वार्थनिरपेक्षया परदुःखप्रहाणेच्छया, नतु निमित्तभेदेन दक्षिणम्, अनुकूलम्, अतएव विश्वेत्यादि॥ ४॥

पृष्ठे १। पंक्तिः १५।

ननु सन्त्येव भाष्यवार्त्तिकतात्पर्यपरिशुद्धिप्रकाशादयो न्यायविषयाणां निर्णायकाः, किमेतेन वृत्तिविरचनेनेत्याशङ्कां सम्भाव्य प्रयोजनप्रदर्शनेन समादधानो विरचनोपायमाह—अलसेति। आवश्यकभोजनादिभिन्नक्लेशावहक्रियाजनकप्रवृत्त्यजनकस्वसमवेतज्ञानसामान्यक इत्यर्थः। अपिनाऽताद्दशमतिस्समुच्चीयते। लीलया=बहुयत्नमन्तरेण। दुरवबोधेभ्यो भाष्यादिभ्यो न्यायविषयावधारणमलसमतीनां न सम्भवतीति तेषामपि तत्स्यादिति प्रयोजनवानयमारम्भ इति भावः। कर्णधारो=निर्वर्तयितेति यावत्। अथ च कर्णवर्तिकरोमिरज इति, एकेनापि तेनैतत्समीहितं सम्पत्स्यत इति तात्पर्यम्॥ ५॥

पृष्ठे २ । पंक्तिः १ ।

स्वकीयकीर्त्यनुवृत्तये निजनामधेयं निबध्नन् विरचनप्रयोजनान्तरं ब्रूते—विद्वत्तोषाय, नतु सामान्यस्य सूनोरिति भावः । अतिसूक्ष्मधियां, नतु साधारणधियाम् । त एव हि वेत्स्यन्ति रहस्यमेतदीयमेवञ्च पाण्डित्यप्रकर्षो व्यङ्ग्यः ॥ अत्र प्रथमपादोपादानबीजं चिन्त्यं, तुरीयश्लोकेन तस्य गतार्थत्वात् ॥ ६ ॥

पृष्ठे २ । पंक्तिः ३ ।

प्रयोजनमिति—प्रयोजनस्यानधिगतौ तत्समीहा तत्साधनताज्ञानञ्च नोत्पत्तुमीशाते, तथा सति तद्गर्भितायास्सामग्र्या असमवधानाच्चिकीर्षायामुदयमनासादयन्त्यां तया जनयितव्या प्रवृत्तिर्न भवतीति भावः । प्रयोजनमिह प्रकृष्टमेव विवक्षणीयम्, अतएव तादृशप्रयोजनोद्देशमन्तरेण शास्त्राध्ययनादौ विषमविषयेऽप्रवर्तमानमभिदधत्प्रेक्षावत्पदमपि श्रयति सार्थकताम्, इतरथा "न केपि प्रवर्तन्त" इत्येवाभिधातुमुचितं स्यात् । प्रवृत्तिसामान्यमेव यत्कथितया प्रणालिकयोपजीवति प्रयोजनस्य प्रतिसन्धानम् ।

पृष्ठे २ । पंक्तिः ५ ।

सिद्धसम्बन्धमिति । सम्बन्धश्चात्र स एव ग्रहीतव्यो यः प्रवृत्तावुपयोगिभावं भजेत, तथाविधश्चाभिधेयादीनाम् शास्त्रं हि स्वरूपेणानुपयुज्यमानं स्वाभिधेयविषयकविज्ञानमेव व्यापारयत्प्रयोजनाय कल्पते, नतु शास्त्राभिधननिःश्रेयसयोर्वाच्यवाचकभावलक्षणस्सम्बन्धस्तादृशो येन प्रदर्श्येत, तदाचक्षते न्यायमञ्जरीकृतः—"यच्च श्रोतृप्रवृत्त्यङ्गं तद्वक्तुं युक्तमादित" इति ।

पृष्ठे २ । पंक्तिः ६ ।

तदिति । प्रयोजनाभिधेयसम्बन्धेत्यर्थः । वार्तिककारा अपि "आदिसूत्रं तस्याभिसम्बन्धवाक्यम्" इत्युदाहरन् । "अभिमतस्सम्बन्धोऽभिसम्बन्ध" इति तात्पर्यटीकाविवरणम् ।

पृष्ठे २ । पंक्तिः ११ ।

शास्त्रतत्त्वज्ञानयोश्च हेतुहेतुमद्भाव इति । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत" इति कारणत्वं कार्यत्वं चेत्यर्थः, एवमेवाधस्तादपि । केचित्तु हेतुहेतुमद्भावाभिधानमन्यमेव सम्बन्धं मन्यन्ते । तदितरे न क्षमन्ते, तस्य प्रतियोगित्वेनानुयोगित्वेन चाभिमते-

ऽवर्तमानत्वात् । न च तत्राखण्डोपाधिविशेषत्वं तदनुनिरुक्तद्वितयसाधारणत्वं च कल्पयितुमुचितं, विशिष्टबुद्धेर्नियामकस्यैव संसर्गत्वेन तस्याश्च प्रत्येकं हेतुत्वादिनैवोपपादने तत्र मानाभावादिति दिक् ॥

अत्र शास्त्रस्य प्रकृतपदाश्रुततया लिङ्गसम्बन्धत्वमनुपपाद्यमानं व्याहन्ति श्रवणे प्रवर्तनाम्, तस्मात्तत्त्वज्ञानपदस्य करणल्युटा शास्त्रपरत्वप्रतिपादनमेव सम्प्रदायविदां साधुतया समालोचयामः । अतएव "तत्त्वज्ञानात्=तत्त्वज्ञप्तिशालिनां, निःश्रेयसाधिगमः" इति व्याख्यानमनादेयम् ।

पृष्ठे २ । पंक्तिः १७ ।

तत्त्वज्ञानद्वारकेत्यादि । नहि मन्त्रविशेषस्येवाभिमतफलसाधनत्वं शास्त्रस्येत्याशयः । हेतुहेतुमद्भावपदेन प्रयोज्यप्रयोजकभाव एव विवक्षितः, तेन निःश्रेयसजनकानुमितिजनकतृतीयलिङ्गपरामर्शानुकूलन्यायार्थज्ञानसम्पादकत्वेऽपि शास्त्रस्य नानुपपत्तिः ।

पृष्ठे २ । पंक्तिः १८ ।

अत्रचेति । बहुव्रीहिकर्मधारययोरसम्भवात्षष्ठीतत्पुरुषस्यादरे तस्यान्त्यपदार्थप्रधानकतया निःश्रेयसस्थानमेव तथाभूतं प्रधानभावमाश्रयेत, एवञ्च विवक्षिता प्रमाणादीनां विशेषता नोपपद्येतेति द्वन्द्वानुधावनम् । 'सर्वपदार्थप्रधान' इत्यनेनेतरेतरयोगो बोध्यते समाहारद्वन्द्वस्य निराकरणात् ।

पृष्ठे २ । पंक्तिः २० ।

पदार्थतावच्छेदकभेदेनेति । एकपदार्थतायामपरपदार्थताविशिष्टान्यत्वेनेति पर्यवसितार्थः । सा च पदजन्यबोधविषयतात्वावच्छिन्नवक्तृसमवेतेच्छीयप्रकारतानिरूपितविशेष्यता प्रकृते विवक्षितुं क्षमा । वै० स्वसामानाधिकरण्य-स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितावद्वच्छेदकतानिरूपितत्वोभयसम्बन्धेन । तेनैकधर्मावच्छिन्नार्थकसरूपैकशेषस्थले, पदार्थतावच्छेदकयोस्तादात्म्येन द्वन्द्वस्याप्रसक्त्या निरुक्तैकशेषस्य न तदपवादकताप्रवादासङ्गतिः परिष्कृतपदार्थतायास्तत्तद्व्यक्तावेव सद्भावात् समानाधिकरण्यविरहेणैकपदार्थतायामपरपदार्थतावैशिष्ट्यस्य दुर्घटत्वात् । पर्याप्तिप्रवेशाच्च न मेयाश्रयवाच्याश्रययोस्तादात्म्यमित्यादौ मेयवाच्ययोरैक्येऽप्यनुप-

पत्तिः । न च घटकुम्भयोरभेद इत्यत्र गतिविरह इति वाच्यं घटादिप-दस्य स्ववाच्यत्वावच्छिन्ने लाक्षणिकत्वात् । अनुमितिग्रन्थे विवृतिका-रास्तुएकपदप्रतिपाद्यविशिष्टार्थस्यापरपदप्रतिपाद्यविशिष्टार्थापर्याप्त-विषयताश्रयत्वस्य द्वन्द्वनियामकत्वमभ्युपेत्य पुरोदीरितानि दूषणानि समादधिरे । केचित्तु पदार्थतत्त्वावच्छेदकभेदान्यतरस्य तथात्वमूरी-कुर्वन्ति। अन्ये तु सकृदुच्चरितश्शब्दस्सकृदेवार्थं गमयतीत्यस्य नाना-र्थकपदविषयकतया सरूपैकशेषानुशासनं व्यर्थयन्तः पदार्थतावच्छे-दकभेदस्यैवद्वन्द्वापेक्षणीयतां विवक्षन्ति। अतएव विचारबाहुल्यसूच-नाय "अन्यत्र विस्तर" इत्युक्तम् ॥

पृष्ठे २ । पंक्तिः २१ ।

निर्देशयथावचनं विग्रह इति । विवृण्वते चैतत् "यदेव निर्देशे वचनभेदोपादाने प्रयोजनं तदिहापि द्रष्टव्यम्" इति निर्देशविग्रह-योरेकवाक्यतामुभयत्र समानवचनसापेक्षामभिप्रयन्तो वार्तिक-कृतः । "तत्र वक्ष्यमाणलक्षणसूत्रनिर्देशानुसारेण कानिचिदेकवचना-न्तानि पदानि विग्रहे ग्रहीतव्यानि, प्रमाणावयवहेत्वाभासानां बहु-वचनेन विग्रहो दर्शयितव्यः, शेषाणामेकवचनेन लक्षणसूत्रेषु तथा-निर्देशात्, एवञ्च लक्षणसूत्रयोरेकविषयता नितरां दर्शिता भवति" इति प्रथमसूत्रव्याख्यायां न्यायमञ्जरीकाराः। एवञ्च वृत्त्यनुपदर्शितो-ऽपि विग्रहप्रकारोऽधिकतया प्रामाणिकतया च ज्ञातव्यः ॥

पृष्ठे २ । पंक्तिः २३-२४ ।

जातयश्च निग्रहस्थानानि चेति । अत्र निर्देश एकवचनस्यैव स-द्भावेनैतद्विग्रहस्य तदेकवाक्यता विघटकत्वाद्यथाश्रुतस्य भाष्यस्या-ननुसरणाच्च बहुवचनमसङ्गतमिति विभावनीयम् । वर्णयन्तीत्यस्वर-सबीजमपि प्रदर्शितमेतेनापदेशेन ।

पृष्ठे २ । पंक्तिः २४ ।

यत्र निर्देशे नास्त्यवान्तरविभागः, श्रूयते चैकवचनं, तत्र द्योतनीयस्य प्रयोजनविशेषस्य विरहादुद्देशवचनमनुरुध्यैव विधातव्यो विग्रहः; इतरत्र तु द्विवचनेन बहुवचनेन वाऽऽर्थेनेत्याशयवतां साम्प्र-दायिकानां मतं विशेषतोऽनुपपादयन्नेव प्रकाशयति, सम्प्रदायविद-स्त्वित्यादि वदन्तीत्यन्तेन । सप्रयोजनत्वादिति । अन्योन्यनिरपे-क्षाणामिन्द्रियादीनां प्रत्येकं प्रामाण्यं, तैस्सम्भूय प्रमाया अजननादिति

प्रमाणे बहुवचनस्यावसेयं प्रयोजनम् । वक्ष्यत इति । प्रमेयसूत्र-(१-१-९) व्याख्यायामत्रैकवचनस्य तत् । दृष्टान्ते द्विवचनमिति । अयञ्च विचारस्सङ्ख्यावचनक्रमानुरोधेन, नातस्संशयस्य क्रमप्राप्तपूर्वविचारगोचरत्वेऽप्यसङ्गतिः । न केवलं दृष्टान्तद्विवचनादयो विभाजकधर्मसङ्ख्यामपेक्षन्ते, अपि तु प्रयोजनमपि, तच्च प्रकृते परस्परमसहकारितयोदाहरणानुकूलत्वम् । इतरेषामप्यवसरे वेदयिष्यते । वक्ष्यमाणत्वादिति-उदाहरणसूत्र एतद्बोध्यम् दृष्टान्तस्य द्वैविध्यमन्तरेणोदाहरणस्य तदसम्भवादिति भावः । संशये सिद्धान्ते च्छले चेति । उपलक्षणमेतदवयवहेत्वाभासजातिनिग्रहस्थानानाम् । एतेषाञ्च सूत्रकारयथाश्रुतभाष्यानुसारिभाषितबहुवचनत्वेन कण्ठतो नोपन्यासः कृतः । तत्र संशयानां सिद्धान्तानां च न्यायप्रवर्तने, अवयवानाञ्च स्वस्वार्थबोधने, हेत्वाभासच्छलजातिनिग्रहस्थानानां च स्वस्वव्यापारेऽन्योन्यनैरपेक्ष्यस्य प्रतिपादनमेव समाकलनीयं बहुवचनस्य प्रयोजनम् । प्रयोजनतर्कनिर्णयवादजल्पवितण्डासु अवान्तरविभागाभावान्निर्देशे एकवचनस्य श्रवणाच्च तेनैव विग्रह इत्यभिसन्धिः । तथापि, यथाश्रुतभाष्यानुसारिणोऽपि । अत्र वदन्तीत्यनेनाभिव्यज्यमानाया निजाननुमतेर्निमित्तं नव्यैरुद्भावयिष्यमाणमापाततएव आलक्ष्यं, यथोक्ताभिप्रायवर्णने तदप्रसञ्जनात् । स्फुटीकरिष्यते चैतदुपरिष्टात् ।

पृष्ठ ३ । पंक्तिः १ ।

टीकाकृद्भिर्न्यायमञ्जरीकृद्भिरप्युदीरिततयाऽनुभवगोचरतया च प्रामाणिकपदवीमधिरोढुमर्हन्तीमुक्तैकवाक्यतामनङ्गीकुर्वतामर्वाचीनानामभिमतमुपन्यस्यति, नव्यास्त्वित्यादिना प्राहुरित्यन्तेन । प्रथमोपस्थितेत्यनेनोपस्थितिलाघवं सूचयता विनिगमनाविरहस्य शङ्का निरास्थीयत । बहुवचनेन विग्रहस्य निःप्रयोजनतां प्रदर्शयन् सम्प्रदायविदां नयं प्रत्यादिशति—नहीति । चतुर्णामित्युपलक्षकं द्वित्वत्रित्वपञ्चत्वादीनाम् तेन संशयादीनां केषुचिन्न क्षतिस्तदसम्भवेऽपि । अग्रिमविभागेनेति । इह चतुर्णादेर्विग्रहवाक्येन सामान्यतः परिच्छिद्यमानत्वेऽपि विशेषजिज्ञासायां न ऋते विभागात्पदार्थविभाजकोपाधयो विशेषतो ग्रहीतुं शक्येरन् , किञ्च न विना द्विवचनबहुवचने अभिहितानि प्रयोजनान्यवसीयेरन् , तथा च न सवैयर्थ्यमिति विवेचयन्तु तटस्थहृदया विवेकिनः । बाधकशङ्कां

प्रत्याचष्टे, नहीति । अतएव सङ्ख्याविशेषपरिच्छेदाय तद्बोधक-वचनेनाश्रितं विग्रहमुपेत्य सर्वत्रैकवचनेन विग्रहविधानादेव । एवञ्चैतत् द्वितीयं पूर्वमतस्य प्रत्याख्यानं बोध्यम् । इदमपि यथाश्रुत एव पूर्वमतग्रन्थे दूषणं, यतो नह्येकवचनादेः प्रयोजनं प्रमाणादिपदार्थौपाधिभूतधर्माश्रितायाः सङ्ख्यायाः परिच्छेदो नाम, किन्तूपदर्शितम् । दुःखभाव ति । दुःखस्य संसर्गाभावो ध्वंसमात्रं वेत्यर्थः । दुःखप्रागभावात्यन्ताभावयोरपि किञ्चिद्विशेषितयोरपवर्गरूपताया मतभेदेनानेकेषु निबन्धेषु व्यवस्थापिततया तदीयरीत्या प्रयोजनत्वं सेद्धुमर्हति। बहुत्वमिति नतु चतुष्ट्वादि, नातो विभागस्य विभाजकधर्माश्रितसङ्ख्या सापेक्षतया सुखत्वदुःखध्वंसत्वयोः प्रत्येकमैक्येऽपि तदाश्रयसाधनत्वस्य धर्मसंसर्गयोरवच्छेदकयोरानन्त्येनासङ्ख्येयत्वेपि क्षतिः। वस्तुतस्तु सोपाधितदितरेच्छाविषयगौणमुख्यभेदाद्द्विविधत्वमेव तस्येति विभजन्तेस्मचैवमेवाधिपरिशुद्धि-"द्विविधं हि प्रयोजनं मुख्यं गौणञ्च" इत्यनेनाचार्याः । प्राहुरित्यत्रोपसर्गः पुरोदितप्रकर्षं बोधयन् ग्रन्थकारसम्मतिं द्योतयति ॥

पृष्ठे ३ । पंक्तिः ६ ।

निःश्रेयसप्राप्त्यर्थोपायान्तरवारणपरतयाऽधिगमपदं सार्थकयति, अत्र चेत्यादिना । केचित्तु निःश्रेयसानुकूलोऽधिगमो निःश्रेयसाधिगम इति व्याचक्षिरे । अन्ये तु तत्त्वज्ञानपदस्य शास्त्रपरतया निःश्रेयसस्याधिगमो यस्मादिति विगृह्य निःश्रेयसजनकतत्त्वज्ञप्तिशास्त्रयोर्जन्यजनकभावमासादयितुं समस्यन्ति, तदुभयमप्यनादरणीयं ।

पृष्ठे ३ । पंक्तिः ९ ।

विशिष्यज्ञानमिति । स्वरूपलक्षणपरीक्षावाक्यैर्जनयितव्यं तेषां पदार्थानामप्रामाण्यज्ञानानास्कन्दितं ज्ञानमित्यर्थः । उद्देशेत्यादि । नाम्ना पदार्थमात्रसङ्कीर्तनम्=उद्देशः । विशेषधर्मेण पदार्थसङ्कीर्तनात्मकस्य विभागस्य तत्रैवान्तर्भावात् । लक्षणञ्चेतरभेदानुमितिव्यवहारान्यतरोपयोगि, एवञ्च पदार्थसामान्यलक्षणस्येतरभेदानाक्षेपकत्वेऽपि न लक्षणत्वक्षतिः, अक्षता हि व्यवहारोपयोगिता । परी-

त्वा च परकीयमतावप्रामाण्यस्योद्भावनेन तद्धोत्तरज्ञानाविषयस्व-कीयमतिप्रयोजको व्यापारः । भाष्यकारास्तु "लक्षितस्य यथालक्षण मुपपद्यते न वेति प्रमाणैरवधारणं परीक्षेति" प्राहुः ॥

पृष्ठे ३ । पंक्तिः १० ।

विशिष्टेति । तत्त्वं चौचित्यात्मकम् । तेन व्युत्क्रमेण प्रयुक्तस्या-ध्यायपञ्चकस्य न शास्त्रत्वप्रसक्तिः । तथा च स्वाश्रयप्रथमाध्याया-द्यन्तिमवर्णविशिष्टान्यद्वितीयाध्यायादिप्रथमवर्णवृत्ति यद्यत्समुदायत्वं तत्तद्व्यक्तिभेदकूटवत्त्वे सति व्यापकतया प्रथमाध्यायत्वादिविशि-ष्टसमुदायत्वं प्रकृतशास्त्रत्वमित्यर्थः पर्यवस्यति, वैशिष्ट्यं स्वसम्बन्धित्व—स्वानुकूलकृतिसमवायि समवेतकृतिप्रयोज्यत्वाभ्याम् । स्वस्य सम्ब-न्धित्वं च कालिकविशेषणत्व—स्वकालिकप्रागभावप्रतियोगि-त्वाभ्यां, स्वाधिकरणत्व-स्वध्वंसाधिकरणत्वाभ्यां वा बोध्यम् । एवमाह्निकसमूहेऽपि निरुक्तरीत्योचितानुपूर्वीकत्वं निवेश्यम् तेन नोदितदिशा दोषावकाशः । तादृशेति पदत्रयं यथाव्याख्यातविशिष्ट-पदार्थप्रतिपादकम् । ननु आह्निकसमूहस्याध्यायत्वे शास्त्रस्याध्यायत्वं, प्रकरणसमूहस्याह्निकत्वेऽध्यायशास्त्रयोराह्निकत्वं, वाक्यसमूहस्य प्रकरणत्वे निरुक्तानां त्रयाणां प्रकरणत्वं पदसमूहस्य वाक्यत्वे तेषां चतुर्णां वाक्यत्वं, वर्णसमूहस्य च पदत्वे कथितानां पञ्चानां पदत्वं प्रसज्येरन्, मैवम्, एकार्थप्रतिपत्तिप्रयोजकाभिप्रायविषयत्वस्य समुदाये निवेशनीयत्वात् आह्निकादिसमूहस्य यत्रैकविशिष्टार्थप्रति-पत्तौ तात्पर्यं तद्विषयत्वस्येतरत्रासद्भावात् । ते च विशिष्टार्था वृत्ति-कृद्भिरेवोदाहृता इति तन्नोपरम्यते । पदसमूह इति अत्र पदं वर्णस-मूहः, निष्कर्षस्तु दर्शितदिशाऽवसेयः । वदन्तीति । वार्तिककृत इति बोध्यम् । अनेकत्वमिति । भेदविशिष्टसङ्ख्यावत्त्वमिति फलितार्थः । वै० स्वप्रतियोग्याह्निकादिवृत्तित्व-स्वानुयोग्याह्निकादिवृत्तित्वाभ्याम्, भेदश्चैकत्ववृत्तिप्रतियोगिताको ग्रहीतव्यः, वृत्तित्वञ्च निरूपितत्व-सम्बन्धावच्छिन्न—स्वनिष्ठावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठाव-च्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नस्व-निष्ठावच्छेदकतानिरूपितावच्छेदकतात्वनिष्ठावच्छेदकतानिरूपित—प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन व्यधिकरणधर्मा-वच्छिन्नभेदस्याभ्युपगमे स्वनिरूपितानुयोगितानिरूपकनिरूपकताव-

च्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वमपि वृत्तिताघटकतया निवेश्यम्। व्यधिकरणधर्मस्य निरूपकतानवच्छेदकतायास्सर्वसिद्धत्वात्। तेन नोभयभेदं व्यधिकरणधर्मावच्छिन्नभेदञ्चादायातिप्रसक्तिरिति। एतेनैकत्वत्वेनैकत्वस्य केवलान्वयितया यत्किञ्चिदेकत्वस्याव्यावर्तकतयाऽत्यन्ताभावप्रतियोगितया भेदप्रतियोगितावच्छेदकतया वा विवक्षणासम्भवेपि न कापि क्षतिः॥

**पृष्ठे ३। पंक्तिः १३।**

उद्देशपौर्वापर्यबीजं सङ्गतिं लभयन्निग्रहस्थानानामित्यन्तेनाभिधातुं पूर्वपक्षयति—यद्यपीति। दुःखप्रयोजकमिथ्याज्ञानसमानविषयकस्यैव तत्त्वज्ञानस्य मोक्षं प्रति जनकत्वेन प्रमेयस्य तद्विषयत्वात्प्रथमं निरूपणीयत्वापत्तिरिति भावः। समाधत्ते—तथापीति। अवधारत:—विरोधिन्या उद्दिदीक्षाया निवृत्तितः। तथाहि—पदार्थसार्थव्यवस्थापकत्वेन प्राधान्यात्प्रथमं प्रमाण एवोपजायत उद्देष्टुमिच्छा, तया च प्रमाण उद्दिष्टे निवृत्तायां च तस्यां किमिदानीमुद्देशनीयमितीहया मोक्षजनकज्ञानविषयत्वेन प्रमेयस्योद्देश इत्याशयः। एवञ्च प्रमाणनिरूपणानन्तरं प्रमेयनिरूपणेऽवसरस्सङ्गतिः। सा च षड्विधा—

> "सप्रसङ्ग उपोद्घातोऽवसरो हेतुता तथा।
> निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते॥"

इत्यभियुक्तोक्तेः। तत्रोपोद्घातादिभेदपञ्चकवती सङ्गतिः प्रसङ्गः, उपोद्घातश्चोपपादकत्वं, तच्च प्रकृतस्य घटकतया तत्साधकतया वा। हेतुता च कार्यत्वकारणत्वद्वयैकतरम्। निर्वाहकैक्यं स्वभिन्नत्वे सति स्वनिर्वाहकनिर्वाह्यत्वम्। कार्यैक्यं च स्वभिन्नत्वे सति स्वप्रयोज्यकार्यप्रयोजकत्वम्। सङ्गतित्वञ्चाशेषसाधारणं पूर्वाभिधानप्रयोज्याया आनन्तर्याभिधानविशिष्टाया बोद्धव्यसमवेतजिज्ञासाया जनकस्य निरूपणीयतावच्छेदकधर्मप्रकारकस्मरणस्य प्रयोजको निरूप्यनिष्ठस्सम्बन्धः, वै० स्वप्रयोजकत्व–स्वप्रयोजकजिज्ञासानुकूलत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभावत्त्वाभ्याम्। जिज्ञासा च ज्ञानविशिष्टेच्छा, वै० स्वनिरूपितविषयितावत्त्व–स्वसमवायिसमवेतत्वाभ्याम् धात्वर्थेन समानकर्तृकायां स्वविषयिकायां चेच्छायां

सनो विधानात् तथाचेदं पारमर्षं सूत्रं "धातोः कर्मणस्समानकर्तृकादिच्छायां वा" इति। सङ्गतिप्रदर्शनञ्च स्वपरिपन्थिभूतोन्मत्तप्रलपितत्वसन्देहसाधनासङ्गतत्वग्रहविघटकत्वेन प्रवृत्तेरुपयोगितया बोध्यम् ॥ प्रमेयस्येत्यादि निखिलमेव षष्ठ्यन्तमन्वेति प्राक्तनेनोद्देश इत्यनेन। न्यायपूर्वाङ्गयोरिति एतच्चाभ्यर्हितत्वे निमित्तभावमासादयति। पूर्वाङ्गत्वं चोपयोगित्वं, तद्धि विप्रतिपत्तिवाक्यात्सन्दिहानो विषयसद्भावेन सन्देह्मीत्यनुव्यवस्यन् प्रतियोगिज्ञानसमवधानेन संशयाभावरूपप्रयोजनमाकलयति, तेन तत्समीहमानस्स्वोपायभूते न्याये प्रवर्तत इत्यनया प्रणाल्या संशयस्यावसेयम्। संशयस्य प्रथममिति। तथा चावसर एव प्रमेयनिरूपणानन्तरं संशयस्य निरूपणे सङ्गतिः। तेन प्रयोजने, अनेन च दृष्टान्ते, एतेन च सिद्धान्ते सङ्गतिरेककार्यकारित्वात्मिका ज्ञातव्या।

ननु "श्रोतव्यो मन्तव्य" इति श्रुत्या स्वसमानविषयकश्रवणानन्तरं मननं विधीयते तत्र सत्यामपि विप्रतिपत्त्यां विरोधिनो निश्चयस्य सत्तया कथं संशयीत वादी, एवञ्च न्यायेन मननं नोपपद्येत, भवति च तत्र मननं,तेन, नचाग्निहोत्रं जुहोति, यवागूं पचतीत्यादौ यथा शाब्दक्रमादार्थक्रमस्य बलीयस्त्वं, तथा प्रकृतेऽपि तत्कल्पयितुं साम्प्रतमिति देश्यं, तत्र यवागूपाकेऽदृष्टार्थताया अग्निहोत्रहोमे द्रव्यान्तरकरणकत्वस्य कल्पनीयतया अयेनार्थक्रमस्य बलीयस्त्वमुपगम्यते प्रस्तुते चान्यथैव न्यायस्योपपत्तेः। किं च 'मन्तव्यश्चोपपत्तिभिः' इति स्मृत्याऽनुमानानन्तरमनुमानान्तरस्य विहितत्वेन तत्रापि विनैव सन्देहं न्यायस्स्वीक्रियेत, इति व्यभिचारान्न संशयस्य सम्भवति न्यायाङ्गता, एतेन संशये न्यायस्य स्वप्रयोज्यानुमितिजनकत्वमेवाङ्गत्वमित्यपि निरस्तमित्यभिप्रायेण शङ्कते, नचेति। समाधत्ते, आहार्यसंशयेति। तथा च लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यानाहार्यज्ञानमेव विरुणद्धि विपरीतादिनिर्णयः, सत्येवं बाधनिर्णयकालेपीच्छयाऽनपवादमुत्पत्तुमीष्टे संशय इत्याशयः। अजन्यान्तत्वं च साक्षात्कारित्वव्यञ्जकविषयताशून्यत्वम् लौकिकेन सन्निकर्षेण दोषविशेषेण वा जायमानाज्ज्ञानात्परं साक्षात्करोमीत्यनुव्यवसायोदयात्, तेन न यथाश्रुते गौरवम्। अनाहार्यत्वं चेच्छाविशिष्टान्यत्वं, वै० स्वविषयत्व–स्वाव्यवहितोत्तरत्वाभ्याम्। परे तु आहार्यज्ञानस्याप्रतिबन्धाय प्रतिबध्ये

तावदिच्छाविशिष्टान्यत्वमनिवेश्येच्छाविरहविशिष्टत्वं प्रतिबन्धककुक्षावेव निक्षिपन्ति इति। अथोक्तस्थले वादिनो निर्णयस्य सद्भावेपि मध्यस्थेन तद्बिभुत्सितेन विचिकित्सितव्यमिति चेत् न, पक्षद्वयतत्त्ववेदिनस्तस्य तदसम्भवात्, प्रत्यपादि चैतत् पक्षधर्मत्वप्रत्याख्यानप्रस्तावे प्रत्यक्तत्त्वप्रदीपिकायां (चित्सुखी) चित्सुखाचार्यैः। वर्धमानोपाध्यायास्तु "सन्देहस्यव्युदासाय न्यायस्योपासने निवर्तनीयत्वेन तस्याङ्गत्वम्" इति न्यायकुसुमाञ्जलेस्तात्पर्यटीकापरिशुद्धेश्च प्रकाशेऽभिदधुः। एतन्मते प्रयोजने संशयस्य स्वनिवर्तकन्यायानुकूलत्वरूपा प्रसङ्गसङ्गतिर्वेदितव्येति। परप्रत्यायने=परार्थानुमाने, न्याय इति यावत्। दृष्टान्तस्य मूलत्वादिति। बुबोधयिषयेत्य वाक्यस्यार्थं तत्प्रयुंक्ते, तथा चानध्यवसितदृष्टान्तस्तत्प्रतिपादकेन घटितस्योदाहरणस्यावयविनं न्यायमुद्भावयितुं न शक्नोतीति तस्योपपन्ना दृष्टान्तमूलकता। न्यायेन परप्रत्यायने दृष्टान्तस्यापेक्षणीयत्वमिति वा। सिद्धान्तविषय इति। बहुव्रीहिः सिद्धान्ताश्रित इत्यर्थः स्वस्वसिद्धान्तमवलम्ब्यैव वादिनोऽन्यार्यप्रयोगात्, इतरेषामपि सिद्धान्तानां तदङ्गत्वमाकरे व्युत्पादितम्। एककार्यतयेति। निर्णयात्मकैककार्यकारित्वसङ्गत्येत्यर्थः। तर्कजन्यतया=तर्कस्य कार्यत्वसङ्गत्या। निर्णयानुकूलत्वात् तस्य प्रयोजकत्वसङ्गतेः। तच्च हेतुत्वे प्रसङ्गे वान्तर्भवतीत्यन्यदेतत्। कथात्रयस्यापीति वादजल्पवितण्डायाश्चेत्यर्थः एतेन रत्नकोशकाराभ्युपगते कथाचतुष्टयेऽननुमतिस्सूचिता। कथा च "विचारविषयो नानावक्तृको वाक्यविस्तारः कथेति" तार्किकरक्षोक्तलक्षणा। वादिप्रतिवाद्यन्याभिधानावृत्ति—स्थापनावादिसाधनाभिधानप्रतिवादिदूषणाभिधानवृत्ति-वाक्यत्वाधिकरणनिष्पादनोद्देशप्रवृत्त वादिप्रतिवाद्यन्यतरसाधनदूषणाभिधानान्यतरात्मिका वा। एतस्याश्च निरूप्यनिरूपकनियमः, कथाविशेषव्यवस्था, वादिप्रतिवादिनियमः, सभ्यसभापतिसम्परिग्रहः, निग्रहस्थानसामस्त्यासामस्त्योद्भावनप्रतिज्ञानम्, कथापर्यवसानसंवित्तिरिति षडङ्गानि, अधिकमग्रे वक्ष्यते। सापेक्षतया प्रयोज्यतया। बुबोधयिषया वाक्यस्योच्चारणं प्रति तदर्थज्ञानस्य साधनत्वेन दूषणस्योद्भावनेन गर्भितायां कथायां तस्य प्रयोजकत्वात्। दूषणप्रयोज्यफलकतयेति वा। एवञ्च वितण्डानन्तरं हेतुत्वेन प्रसङ्गेन वा सङ्गत्या हेत्वाभासनिरूपणम्। अत्रैक-

कार्यकारित्वं सङ्गतिरित्यन्ये । ननूक्तसङ्गतेर्न निरूपणक्रमनियामकत्वं सम्भवति दूषणान्तरसाधारणयादित्यनुयोगं निराकुरुते—वाद इत्यादिना । देशनीयत्वम् उद्भावनार्हत्वम् । हेतुवदाभासमानत्वाच्चेति व्याप्तिपक्षधर्मत्वोभयवदन्यत्वे सति, तेन ज्ञायमानत्वाच्चेत्यर्थः । हेत्वाभासोपजीवनेनेति असिद्धयादिज्ञापयितुमेव छलं प्रयुज्यते, अन्यथा कथायां तस्य वैयर्थ्यमेव स्यात् स्वतस्तस्यानुमानाविघटकत्वात्, तथा च ज्ञापकत्वरूपोपोद्घातसङ्गत्याऽवसरतो वाच्छलस्य निरूपणमिति तात्पर्यम् । स्वव्याघातकत्वे नेति, येनैव प्रकारेण परकीयः पक्षः प्रतिषिध्यते, तेनैव स्वकीयपक्षस्यापि प्रतिषेधः परापततीति स्वव्याघातकत्वं जातेरित्यर्थः । अभिधास्यते चैतद्विस्तरेण पञ्चमाध्यायस्यादिमाह्निके । छलनिरूपणानन्तरं जातेस्ततश्च निग्रहस्थानस्य निरूपणे सङ्गतिर्निग्रहरूपैककार्यकारित्वस्वरूपा बोध्या । नियम्यते च निरूपणेषु पौर्वापर्यं ताभिरेव सङ्गतिभिः प्रायेण, अन्नत्यमधिकमन्यत्र विस्तरेण प्रतिपादितमित्युपरम्यते ॥

पृष्ठे ४ । पंक्तिः ३ ।

प्रमाणादिषु पदार्थेषु केषांचित्सामान्यविशेषभावमुपेयुषां पृथगभिधाने कथन्तां निराकुर्वन् क्वचन परीक्षितुमुपक्रमते अत्र चेत्यादिना । संशयादेरित्यादिना तर्कादेः परिग्रहः । निरनुयोज्यानुयोगरूपेति । अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तनिग्रहस्थानोद्भावनात्मकेत्यर्थः । "अप्राप्तकाले ग्रहणं हान्याद्याभास एव च, छलानि जातय इति चतस्रोऽस्य विधा मता" इति सुव्यक्तं वच्छलजात्योर्निग्रहस्थानान्तःपातितेति । प्रकारभेदेनेत्यादि । सामान्योपदेशेन विशेषस्याप्युपदिष्टतायां पुनर्विशेषोपदेशः प्रयोजनाधिक्यं सूचयति, तथाच प्रमेयान्तःपातिन्यपि संशये न्यायस्योपयोगितायास्तर्के च सहकारितायाः निर्णयेच जन्यतायां निग्रहस्थानान्तर्गतयोश्च छलजात्योस्स्ववाक्ये परिवर्जनीयत्वस्य परवाक्ये पर्यनुयोक्तव्यत्वस्य सूचनेन शिष्यबुद्धिविशदयितुं तेषां पृथगुपन्यास इत्याभिप्रायः । 'निग्रहस्थानान्तःपातिनां, तत्त्वेनान्येनाङ्गीकृतानां, स्वयं हेत्वाभासप्रयोगस्यैव तदन्तःपातितायाः प्रतिपादयिष्यमाणत्वात् । तथा च ये हेत्वाभासस्यैव निग्रहस्थानान्तःपातितामाम-

न्ति, ते तस्य पार्थक्येनाभिधाने बीजं नाध्यवस्यन्ति, अपि त्वत्पाद एव प्रातिभाद्यैश्वर्यशाली तत्प्रतिपद्यते, तथाभिधानं तेषां नये निर्बीजमेवेत्याक्षेपः वस्तुतस्तु अयमाक्षेप आपातत एव, हेत्वाभासस्यापि निग्रहस्थानतायां पार्थक्येनाभिधाने बीजस्योपपत्ते-स्तदेतदनुपदमेव तात्पर्यकृतां वार्तिकव्याख्याने प्रकटीकरिष्यते ।

## पृष्ठे ४ । पंक्तिः ९ ।

यदीत्यादि पृथग्वचनमित्यवसानो विभिन्नस्थलीयस्य निरुक्त-क्रमरहितस्य वार्त्तिकस्यार्थानुवादः । पृथगभिधानं स्यादिति । एतेन हेत्वाभासो निग्रहस्थानेभ्यः पार्थक्येनाभिधातव्यो वादे देश-नीयत्वादित्यनुमाने न्यूनादिषु व्यभिचारप्रदर्शनेन व्याप्तिः प्रत्या-ख्याता । देशनीयत्वं स्यादिति । तथा च हेत्वाभासो वादे देशनीयः पृथगभिहितत्वादित्यनुमाने संशयादौ व्यभिचारबोधनेन सा प्रत्या-दिष्टा । नच व्यभिचारस्याप्रदर्शनेनापि व्याप्तिर्न सेत्स्यति, अभिधा-नस्य पुरुषेच्छाधीनत्वेन जायमानाया व्यभिचारशङ्काया निवर्तकस्य तर्कस्य विरहादिति वाच्यं, स्फुटत्वादेव व्यभिचारस्याभिधानात् । प्रस्थानेति । तच्च व्यापारः । तथा चाग्निहोत्रहवनादीनां त्रय्याः, हलशकटादीनां वार्तायाः, स्वाम्यमात्यादीनां दण्डनीतेः, संशयादी-नामान्वीक्षिक्याः स्वस्वमुख्यप्रयोजने व्यापारत्वम् । यदीयमपि न्यायविद्या संशयादि न व्यापारयेत् । तर्हि आत्मविद्यामात्रत्वेनोपनि-षदिव त्रय्यामेवान्तर्भवेत्, तथा च व्याहन्येतैव चतुर्विधता विद्याना-मिति भावः ।

तात्पर्यकृतस्तु—एकदेशिना तार्किकम्मान्येनोपन्यस्तमुक्तभाष्य-व्याख्यानं दूषयति वार्तिककारो, यदीत्यादिना, स्वमतेन व्याचष्टे, एतदेव त्वित्यादिना । "एतदेव तु न्याय्यं पृथगुपदेशप्रयोजनं, विद्याप्रस्थानभेदज्ञापनार्थत्वात् । इतीहत्यं वार्तिकस्वरूपम् । तस्य च परम्परया निःश्रेयसोपयोगित्वाद्वादजल्पवितण्डाविद्याः, तासां प्रस्थानस्य=व्यापारस्य प्रभेदबोधनायेत्यर्थः । वादे हेत्वाभासा एव निग्रहस्थानत्वेनदेश्या, नाप्रतिभादय इति भाष्याभिसन्धिः नचैता-वताऽपि हेत्वाभासस्य पार्थक्येनाभिधानमनुपपादितनिमित्तकमेव, वादेदेशनीयत्वन्तुन्यूनादिसाधारणन्नार्हतितन्निमित्ततामासादयितु

मितिव्यपदेश्यं, हेत्वाभासपदं सूत्रावस्थितं न तावन्मात्रावधारणार्थम्, अपि तु तत्त्वप्रतिपित्सुकथात्मके वादे यदनुद्भावने तत्त्वप्रतिपत्तिर्व्याहन्येत, तेषां सर्वेषामेव सङ्ग्रहार्थम्। एवञ्च हेत्वाभासस्येव न्यूनाधिकापसिद्धान्तानामनभिधानं व्याहन्त्येव तत्त्वप्रतिपत्तिमिति तत्पदेन ते शक्यन्त एवाजहत्स्वार्थलक्षणया केनचिद्रूपेणोपादातुं, नत्वाप्रतिभादयस्तथा, तस्मादेतेषां न सङ्ग्रहस्तत्पदेनेति प्राहुः। तथा च तदप्यसङ्गतमित्यादिना वार्तिककृत्खण्डनमप्रामाणिकं जानाति भगवानक्षपाद एवेतिपुरोदितमाक्षेपं प्रतिक्षिपतीति विचक्षणैर्विचारणीयमिति सङ्क्षेपः॥

४। १५।

निगृहीतत्वापत्तेरिति। अत्रेदं विभावनीयम्; निग्रहस्थानत्वं नाम अखण्डिताहङ्कृतेः परकीयेऽहमुत्कृष्ट इतिज्ञानेऽप्रामाण्यज्ञापनात्मकस्य पराजयस्य प्रयोजकत्वं, तच्चोद्भावनघटितम् तदुक्तं दोषसामान्यनिरुक्तिविवृतौ भट्टाचार्यैः विजयप्रयोजकत्वञ्च हेत्वाभासस्य स्वज्ञानाधीनपरोक्तहेतुदोषोद्भावनद्वारा" इति। तथा च हेत्वाभासस्यापि निग्रहस्थानत्वे नापत्तिरिति।

पृष्ठे ४। पंक्तिः १९।

अवच्छेदकप्रवेशादेवेति। हेत्वाभासपदस्य निग्रहस्थानविभाजकसूत्रावयवस्यार्थतावच्छेदके प्रवेशादेवेत्यर्थः। पदार्थतावच्छेदककुक्षिनिक्षिप्तत्वस्य पृथक् निरूपणीयत्वाभावसाधकतां व्यभिचारप्रदर्शनेन निरस्यति—तथासतीति।

पृष्ठे ४। पंक्तिः २२।

न प्रामाणिकमित्यादि। मङ्गलं न वेदबोधितकर्तव्यताकं, विघ्नमवगत्य शिष्टेनाविधीयमानत्वादित्यर्थः। तदेतदनुमानमसिद्ध्या दूषयति—कृतस्येत्यादिना। विघ्नाभावनिर्णयश्च योगर्धिसम्पादितसार्वज्ञात्।

पृष्ठे ४। पंक्तिः २६।

प्रमाणमित्यादि। "प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः" (१०२) श्लो.। इति भारतीयश्रीविष्णुसहस्रनामस्तवे। एवं तत्रैव

"प्रमाणं बीजमव्ययम्" इत्यपि द्रष्टव्यम्। मङ्गलमिति। उदकुम्भन्यायादिति भावः। अत एव पातञ्जलदर्शने "अथ योगानुशासनम्" इत्यादिमे सूत्रेऽथशब्दोच्चारणस्य तथात्वमभ्यधायि तदीयभाष्यव्याख्यायां वाचस्पतिमिश्रैः। कुसुमाञ्जलौ च प्रथमश्लोके सच्छब्दोच्चारणस्य वर्द्धमानोपाध्यायैः॥

पृष्ठे ४। पंक्तिः २५।

पूर्वपूर्वसापेक्षतयेति। उद्देशेन सामान्यतः पदार्थमवगच्छन् तल्लक्षणं जिज्ञासते, अथेदमीयवाक्यादवसीयमानमिदं यथावदुपपद्यते नवेति परीक्षामाकाङ्क्षते, अतः परीक्षायां लक्षणस्य, तत्र चोद्देशस्यापेक्षितत्वमित्यर्थः।

पृष्ठे ४। पंक्तिः २७।

सोद्देशपदार्थलक्षणच्छलपरीक्षेति। एवञ्च तादृशविशिष्टैकार्थप्रतिपत्तिप्रयोजकाभिप्रायविषयत्वमादायाह्निकद्वयेऽध्यायस्य लक्षणं समन्वेयम्। एवमग्रेपि वक्ष्यमाणं तत्तदर्थमुपादाय प्रकरणसमूहात्मकाह्निकादीनाम्। सपरिकरेति। प्रयोजकेन प्रयोज्येन सहकारिणा सहेत्यर्थः।

पृष्ठे ५। पंक्तिः ५।

न्यायोत्तराङ्गेति। तत्त्वञ्च सहकारित्वजन्यत्वात्मकम्।

पृष्ठे ५। पंक्तिः ६।

एतच्छास्त्रस्यान्वीक्षिकीशब्दप्रतिपाद्यत्वं भूरिप्रयोगतो रूढ्यैव योगेनाप्याह—श्रवणादिति।

पृष्ठे ५। पंक्तिः ७।

व्यवह्रियत इति। नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति, तर्क्यतेऽनेनेति च योगेन, रूढ्या चेति शेषः, रूढिं प्रदर्शयति—तथाचेत्यादिना

पृष्ठे ५। पंक्तिः ८।

पुराणेति। "पुराण न्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" इति याज्ञवल्क्य स्मृतिः।

पृष्ठे ५ । पंक्तिः ९ ।

पुराणमिति । अत्र न्यायतर्कश्चेत्यस्य न्यायपदवाच्यस्तर्कश्चेत्यर्थः, तेन न शाब्दबोधानुपपत्तिः, विशेष्यत्वप्रकारत्वावच्छेदकयोर्भेदात् । एवं विष्णुपुराणेऽपि "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः, धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश, आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः, अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैवताः" इति ।

पृष्ठे ५ । पंक्तिः ११ ।

तर्कणेति । स च "पूर्वोत्तरविरोधेन कोऽत्रार्थोऽभिमतो भवेत् । इत्याद्यमूहनं तर्कः "शुष्कतर्कन्तु वर्जयेत्" इति कूर्मपुराणोक्तो ग्रहीतव्यः ।

पृष्ठे ५ । पंक्तिः १४ ।

आन्वीक्षिक्यनुसारीति । किञ्चैतस्यास्सकलप्रेक्षावत्प्रयोजनोपजीव्यत्वे "प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् । आश्रयस्सर्वधर्माणां विद्योद्देशे प्रकीर्तिता" इति भाष्ये भाषितं प्रामाणिकतयाऽनुसन्धेयम् । प्रदीप इति । प्रकाशकत्वात्प्रदीप इवेत्यर्थः, दृश्यन्ते च तत्सदृशेऽपि तत्पदप्रयुक्तयः "अग्निर्माणवकः, आदित्यो यूपः, यजमानः प्रस्तरः, गौर्वाहीक" इत्यादौ । इतराश्च विद्याः प्रमाणादीननिरूपयन्त्यस्तैर्निरूपितमेवार्थं प्रतिपादयन्ति । अत एतस्याः प्रकाशकत्वम् । सर्वकर्मणाम् विद्याव्युत्पाद्यानाम्, प्रमाणादिप्रकाशितमर्थं विधेयतया निषेध्यतया वा कुर्वन्त्यपरा विद्या इत्युपायत्वम् । सर्वधर्माणामाश्रय इति । सर्वासां विद्यानां पुरुषप्रवर्तकत्वं धर्मस्तेषां, तं द्वारीकृत्य तासामेव वा सहकारिविधयोपकारकत्वेनाश्रय इति भावः । एवञ्च शिष्टैः परिगृहीतत्वात् श्रेयोऽर्थिभिरवश्यमध्येतव्यमेतद्दर्शनमित्यप्युपदिष्टं भवतीति । मूले, तत्त्वज्ञानादिति । अनुकूलत्वमिह पञ्चम्या प्रतिपाद्यते, तच्च जनकप्रयोजकसाधारणम्, तेन "आत्मादेः प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगम" इति भाष्यात् तस्यैव मुक्तिजनकत्वेन प्रमाणादीनां तत्त्वज्ञानस्य च तत्रोपयोगितया जनकत्वप्रयोजकत्वयोरेकतरस्य विभक्त्यर्थत्वेऽनुपपत्तिरित्याक्षेपो निरस्तः । ननु वादादिनिग्रहस्थानान्तानां तत्त्वज्ञानस्य पराभिभवोपायत्वेन मदमानादिहेतुत्वान्निःश्रेयसविरोधित्वमेवेति चेत्, न, अन्वयव्यतिरेकयोर्व्यभिचारान्मदमानादिहेतुत्वस्यासिद्धेः, वादा-

दिकमजानन्तोऽपि सनकादयो माद्यन्ति, आस्वादयन्ति चाभिमानम्। तदाकलयन्तोऽपि तत्त्वविदो न तथेति ॥

अथेदानीन्तनानां सूत्रभाष्यविषये तावदुपलभ्यन्ते विप्रतिपत्तयः, तत्रैकैकसूत्रवृत्तिव्याख्यानान्ते ता निराकरिष्यन्ते एककोटिनिर्णयेन। सूत्रं नाम "अल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः" इति पराशरोपपुराणाष्टादशाध्यायोक्तलक्षणम्। तच्चं च प्रमाणप्रमेयेत्यादि निःश्रेयसाधिगम इत्यन्तस्यैव बोध्यम्, तत्त्ववतरणस्थान्तिमभाष्यभागघटितस्य "प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्येतच्छास्त्रस्यादिमं सूत्र"मिति वार्तिकात् तार्किकरक्षाव्याख्याभिधानाच्च। सूत्रत्वसामान्यं च "तत्र संक्षेपतः प्रथमसूत्रमनूद्य तस्य तात्पर्यमाह," इत्यादि तात्पर्यटीकाऽपि प्रमाणमिति इति ॥ १ ॥

पृष्ठे ५। पंक्तिः १५।

प्रयोजनसम्बन्धमवधारयितुमाशङ्क्य द्वितीयसूत्रमवतारयति नन्वित्यादिना। मैत्रेयीब्राह्मणे "आत्मा वा अरे द्रष्टव्य" इतिदर्शनमनूद्य तत्साधनत्वेनाभिहितया "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुत्या विहितश्रवणमननसाधनाकाङ्क्षानिवर्तिकायां "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः" इतिश्रुतौ श्रुतिपदस्य प्रमाणशब्दोपलक्षकतया तैः प्रथमं श्रुतात्मानोऽपि निश्शेषसुखद्योतिकां दुःखानुषङ्गिणीं विषनिषेवितां माध्वीकधारामिवावधार्य जिहासवस्तदा तदात्यन्तिकनिवृत्तिस्वरूपाय कैवल्याय केवलं विदिततन्निदानतया प्रयतमानतमा विवेकिनस्तत्र यथाश्रुतानेकश्रुत्यादिविसंवाददर्शनेनार्थान्तरतात्पर्यकत्वविचिकित्सायास्समुदयेन तज्जनितशाब्दबोधे प्रमात्वविरोधिनं संशेरते। अतस्तद्व्युदासाय न्यायप्रयोज्यां मननपदव्यपदेश्यामानुशासनिकोपपत्तिसन्ततिभिराश्रयन्तीत्थंभावव्यवस्थापिकामनुमितिम्। अत एव शङ्कसूकस्याक्षामलक्षालनायाऽक्षपादकणादोक्तयुक्तिसंसक्तशास्त्राणामध्ययनमतितरां मोक्षोपयोगिभावं भजते नचैताभिरनुमितात्मतत्त्वा अपि ते पूर्ववृत्तसविपर्यासवासनां जहति मननस्य तदपनोदने सामर्थ्यविरहात्। न किलाशाविभ्रमेण व्याकुलितमानसो ऋते तत्त्वसाक्षात्काराच्छतधापीयं प्राचीयं च प्रतीचीत्यनुमिमानोऽपि प्रभवति विपर्ययाहितां भावनां व्यपनयितुम्। एव-

श्चैतदेकतमामिच्छन्तस्साक्षात्कृतिमनुमयानिश्चितात्मतत्त्वास्त एव सन्दिहानप्रवृत्त्यगोचरं निदिध्यासन्ति । अथ श्रुतिस्मृत्युपदिष्टयोगविधिना नैरन्तर्येण सत्कारातिशयेन तदेव तत्त्वं सुचिरस्य चिन्तयन्त आत्ममनस्सन्निकर्षाद्योगप्रभवधर्मप्रभावादासादयन्ति संसारविटपिबीजदृढभूमिसवासनमिथ्यात्मबुद्धिविधूननविधायिनीं तस्य साक्षात्कारात्मिकां प्रमितिम्; सा चेयमुत्तमयोगपदेन प्रतिपद्यते । तदुक्तम् "आगमेनानुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्" इति । रसः=इच्छा । तथा च वृत्तौ तत्त्वज्ञानस्येत्यत्र ज्ञानपदं साक्षात्कारपरम्, अन्यथाऽसङ्गतिः, तत्त्वश्रवणादेस्साक्षान्निःश्रेयससाधनत्वस्याक्षेपविषयत्वे ह्यनभ्युपगमेनैव समाधानमुचितं स्यात् न पुनः क्रमस्य प्रदर्शनेनेति ॥ निश्रेयसहेतुत्वम् ।=दुःखात्यन्तविमोक्षलक्षणे मोक्षे जनकत्वम्, अन्यादृशस्य तस्यात्र शास्त्रेऽप्रतिपादनात् । **दर्शनादिति** । पुराणादौ श्रवणादनुमानाद्वेत्यर्थः । तत्त्वसाक्षात्काराद्व्यवधानेन यथोक्तमोक्षस्येष्यमाणत्वे तमुपेयुषा पुरुषधौरेयेण प्रणीतस्य शास्त्रस्य सम्प्रदायो विच्छिद्येत, तन्निर्मितावुपयोगिनस्समयस्यासद्भावात्, अतत्त्वज्ञेन धूर्तेन प्रणीतं वा तद्यापद्येत, इति तत्त्वसाक्षात्कारवतामवस्थानमनुमीयत इतिभावः ।

पृष्ठ ५ । पंक्तिः ११ ।

**द्विविधमिति** । त्रिधादिपदसमभिव्याहृतसङ्ख्यापदार्थश्च स्वार्थनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृबुद्धिविषयतोपलक्षितधर्मविशिष्टत्वे सति वस्तुविशिष्टान्या या सङ्ख्या तदाश्रयवान् । प्र० वै० स्ववृत्तित्व—स्वसमानाधिकरणभेदीयप्रतियोगितानिरूपितस्वाश्रयवत्त्वसम्बन्धावच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकतानिरूपकप्रतियोगिताकभेदवत्त्वाभ्याम् । वृत्तित्वञ्च स्वाश्रयसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वावच्छिन्नप्रतियोगिताकभेदवत्त्वेन । द्वि० वै० स्ववृत्तित्व—स्वविशिष्टवृत्तित्वाभ्याम् । वै० स्वभिन्नत्व-स्वसामानाधिकरण्याभ्याम् । भवति चैवं विधा सङ्ख्या प्रकृते परत्वापरत्वे निश्रेयसविभाजके अधितिष्ठन्ती द्वित्वात्मिका । एषा हि निःश्रेयसत्वस्याधिकरणं व्याप्नोति स्वाश्रयाश्रयत्वसंसर्गेण तदप्येतेन द्वित्वस्याधिकरणम्, परत्वापरत्वयोर्विरुद्धतया न वस्तुना विशिष्टा केनापि । परत्वगतैकत्वसङ्ख्यामादाय परत्वेन निःश्रेयसमेकविधमित्यस्य, परत्वापरत्वघटत्वेषु

श्रितां त्रित्वसङ्ख्यामुपगृह्य तैर्निःश्रेयसं त्रिविधमित्यस्य, परत्वा-परत्वनिःश्रेयसपदाभिधेयत्वेषु वर्तमानां तामासाद्य तैर्निःश्रेयसं त्रिविधमित्यस्य, व्यवहारस्य प्रामाण्यवारणायोद्देश्यतावच्छेदकस्य सङ्ख्यायामेतस्याश्च तत्र व्यापकत्वं वस्तुविशिष्टान्यत्वं च निवेशितम्। नचैवं निःश्रेयसमेकविधमिति प्रयोगस्य प्रामाण्यमनपवादं निःश्रेय-सत्वगतैकत्वसङ्ख्यायास्तादृशत्वादिति देश्यम्, तेन रूपेण परापरयो-रेकविधत्वेनोक्तापत्तेरिष्यमाणत्वात्। अत एव क्वचित् पदार्थो द्विविधो भावाभावभेदात्, क्वचित् स सप्तविधो द्रव्यादिभेदादिति विविधविभा-गस्यापि नायुक्तता। एतेनोक्तापत्तिव्युदासायोद्देश्यतावच्छेदकावृत्ति-त्वेन निरुक्तसङ्ख्या विशेषणीयेति केषाञ्चित् समाधानमनादेयम्, "अन्योन्याभावस्यैकविधत्वात्" इति सिद्धान्तमुक्तावल्यादि प्रयो-गस्याप्रामाण्यप्रसङ्गात् निश्रेयसपदाभिधेयत्वगतैकत्वसङ्ख्याया अ-व्यावृत्तेश्चेत्यधिकं मद्विरचिते दीधितिविवृतिप्रकाशे जिज्ञासुभिर्विलो-कनीयमित्यलमप्रासङ्गिकेन विस्तरेण।

परापरभेदादिति। परत्वापरत्वोभयत्वैतत्त्रित्वावच्छिन्नप्रतियो-गिताकभेदादित्यर्थः। एतस्य च प्रतियोगितासम्बन्धेन द्वैविध्यस्य सिद्धौ साधनत्वं बोध्यम् अन्यथा पञ्चम्यसङ्गतिः, पितुः पाण्डित्येन पुत्र आहूत इत्यादौ पाण्डित्यपदात्पञ्चम्या वारणाय "विभाषागुणे-ऽस्त्रियाम्" इति सूत्रे (२।३।२५) गृहीतस्य गुणपदस्य नीतिसाहित्यनि-खिलदर्शननिरुक्तगुणप्रतिपादकत्वस्याप्राप्त्या विवक्षितुमशक्यतया वि-धेयवदाश्रितत्वार्थकत्वमेव कल्पनीयम्, तस्य च पुराभिहितभेदेऽभावा-त्, व्यभिचारप्रसक्तिश्चेति॥ यद्यपीहार्थभवनक्रमानुरोधादपरपदमेव पुरा निपतितुं प्रभवति, तथाप्यभ्यर्हितत्वादल्पस्वरत्वाच्च पश्चात्प्रयुक्तम्। तत्रेति। परापरयोरित्यर्थः। इह "यतश्च निर्धारणम्" इति सूत्रेण (२।३।४१) विहिता सप्तमी। तदर्थस्तु यादृशविशेषणेन विशिष्टं यद्धर्मावच्छिन्नं तादृशविशेषणविधुरतद्धर्मावच्छिन्नव्यावृत्तत्वविशि-ष्टविधेयवत्तया प्रतिपाद्येत तद्धर्मावच्छिन्नार्थकपदात् षष्ठ्यास्सप्त-म्याश्च साधुत्वमिति। व्यावृत्तत्वञ्च प्रकृतेऽत्यन्ताभावप्रतियोगित्वम्, अभेदान्वयिविधेयसमभिव्याहारस्थल एव हि तस्य भेदप्रतियोगि-तात्मकत्वम्। अत्र तत्त्वज्ञानाव्यवहितोत्तरभिन्नभेद एव विधीयते, विशेष्यवाचकेन पदेन समभिव्याहृतोऽन्ययोगस्य विशेषणवाचकेन

चायोगस्य व्यवच्छेदमभिदधात्येवकार इत्यस्य क्लृप्तत्वात्। सप्तम्या च प्राकृतिकमेव व्यावृत्तत्वं बोध्यते, तच्च शक्त्या भक्त्या वेत्यन्यदेतत्। तदेकदेशेऽत्यन्ताभावे प्रकृत्यर्थस्य परापरगतद्वित्वाश्रयस्य जीवन्मुक्तित्वावच्छिन्नभेदविशिष्टोक्तद्वित्वावच्छिन्नाधिकरणतानिरूपिताधेयत्वेन प्रतियोगित्वस्य च विधेयभूतभेदे विशेषणतया तस्य च जीवन्मुक्तौ द्वित्वसमानाधिकरणस्वरूपेण सम्बन्धेनान्वय इति ॥

पृष्ठे ८। पंक्तिः २०।

तत्त्वज्ञानानन्तरमेव = तत्त्वसाक्षात्कारानन्तरमेव। तदपि = जीवन्मुक्तिलक्षणमपरमपि। अवधारितात्मतत्त्वस्य = संशयानन्तरं साक्षात्कृतात्मतत्त्वस्य। शब्देनोपपत्तिभिश्च निर्णीतात्मतत्त्वस्येति वा नैरन्तर्येति। सुचिरं नैरन्तर्येणादरातिशयेन च विधीयमानं यत् पौनः पुन्येन ध्यानं तज्जनितेन तत्त्वसाक्षात्कारेणापहृतसवासनमिथ्याज्ञानकस्येत्यर्थः, तेन नैरन्तर्याभ्यासस्य तदपक्षेपणे साक्षादक्षमत्वेपि न क्षतिः। प्रारब्धं कर्म=एतच्छरीरावच्छेद्यभोगजनकमदृष्टम्। एतच्च द्वितीयार्थे विषयित्वे स्वजन्यफलनिरूपितत्वेनान्वेति, साक्षात्कारविशेषात्मकस्य भोगस्य तदगोचरत्वात्। तथाच तत्त्वसाक्षात्कारात्परमपरमुक्तिरेव जायते, न परं शास्त्रप्रतिपादितमिति न तदानीं देहोच्छेदस्यापत्तिः, सञ्चितकर्मणामवस्थानात्। न वा शास्त्रसम्प्रदायोच्छेदस्य, न वा तत्र धूर्तप्रणीतत्वस्य, अपरमुक्तेरेव शास्त्रप्रयोजकत्वात्। तस्याञ्च भवने "जीवन्नेव हि विद्वान् संहर्षायासाभ्यां विमुच्यते" इत्यादि प्रमाणं बोध्यम्। विद्वान् = तत्त्वसाक्षात्कारवान् संहर्षायासाभ्यां = रागद्वेषोत्पादकाभ्यां सुखदुःखाभ्याम् मिथ्याज्ञानापायेन तथाविधसुखदुःखयोरसम्भवात् ॥ अथ "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति स्मृतिरशेषादृष्टनाशकतां प्रतिपादयति तत्त्वज्ञानस्य, एवञ्च सञ्चितकर्मसामान्यस्य तदानीं क्षयाच्छरीरोच्छेदापत्तितादवस्थ्यमिति चेत्, न विमतानि कर्माणि स्वेतरानाश्यत्व—स्वनाश्यत्वाभ्यां भोगविशिष्टानि अनाचरितप्रायश्चित्तकत्वे सति कर्मत्वादित्यनुमानानुगृहीतत्वेन प्रबलया "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्" इति स्मृत्या पुराभिहितस्मृतेर्दुर्बलत्वेन बाध्यत्वात्। यद्यपि कर्मणो भोगैकनाश्यत्वे प्रायश्चित्तविधेर्वैफल्यमापतति, तथापि तत्र

विशेषवचनेनापवादात्तत्र कर्मपदस्य प्रायश्चित्तानाश्यकर्मपरत्वमुपगम्यते । नच "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुतेः "सा सर्वा वेष्टयितव्या" इति स्मृत्या वेष्टने स्पर्शालम्भवेन विरोधे प्राप्ते श्रुतेरेव प्राबल्यं स्मृतिविरोधाधिकरणेऽधिमप्रथमाध्याये "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति सूत्रेण परममुनिना जैमिनिना सिद्धान्तितम् । किञ्च "श्रुतिस्मृतिविरोधे हि श्रुतिरेव बलीयसी" इत्यभिधानम् । अत एव श्रुतिविरोधे स्मृतेरन्यार्थकत्वं तत्र तत्र कल्पितमप्युपपद्यते, एवञ्च "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति मुण्डकश्रुतिविरोधेन "अवश्यमेव भोक्तव्यं कृतं कर्म" इत्यत्र कर्मपदस्य तत्त्वज्ञानानाश्यकर्मलक्षकत्वमितरथाऽप्रामाण्यमेवाभ्युपेतव्यमितिनिरुक्तश्रुतिसध्रीचीनत्वेनाधिकबलया "ज्ञानाग्निस्सर्वकर्माणि" इति स्मृत्याऽवधारिते ज्ञानस्य पुण्यपापकलापनाशकत्वे तत्सद्भावेन तयोर्ध्वंसाच्छ्रूयत एव कलेवरस्योच्छेद आपादयितुमिति साम्प्रतम्, समाधिसमृद्धिमाहात्म्यात्प्रारब्धकर्मव्यतिरिच्यमानानां कृत्स्नानामेव कर्मणां विभिन्नविपाकसमयानामपि कायव्यूहेष्वेकदा भोगेन जीवात्ममहत्त्वं साधयता कृयाभ्युपगमेनैव व्याकुप्येत यतो निरुक्ता भगवती श्रुतिः "अचिन्त्यो हि समाधिप्रभाव" इत्यभिधानात् । न हि तत्र कर्मपदमभुक्तमेव बोधयति नियतिम्, नापि श्रुतिस्तत्त्वसाक्षात्काराव्यवहितोत्तरत्वं तासां नाशेषु । "तावदेवास्य चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति श्रुते (छा०)-र्विपक्षानुमतस्य श्रुत्यर्थस्य स्मरणस्य च बाधिकाया उपलब्धेश्च । अस्याश्च अस्य तत्त्वसाक्षात्कारवतः । चिरं विलम्बः । स च सञ्चितकर्मकदम्बकस्य फलभोगेन "सम्पत्स्ये" कैवल्येनेत्यर्थः । किञ्च सूक्ष्मदृशा विचार्यमाणा ज्ञानाग्निरित्यादिस्मृतिर्नात्र परिपन्थिभावमाश्रयति, प्रत्युत साहायकमाचरन्ती तावदनुकूलतां, भस्मनि परम्परयोपयोगिनाऽग्निना ज्ञानस्य तादात्म्यारोपेण कर्मनाशे साक्षात्साधनत्वस्याप्रतिपत्त्या भोगद्वारैव तथात्वस्य पर्यवसानात् । श्रूयते च वामदेवसौभरिप्रभृतीनां विदुषां भोगेन कर्माणि नाशयितुमुपादानं कायसमवायस्येति । एतच्च "कर्मणो भोगनाश्यत्वेऽपि ज्ञानस्य कर्मनाशकत्वं, भोगस्य तत्त्वज्ञानव्यापारत्वात् । नच भोगमात्रस्यैव कर्मनाशे सामर्थ्यात्तत्त्वज्ञानव्यभिचारः, कर्मप्रागभावासहवृत्तिकर्मनाशे युगपत्कर्मभोगे वाऽव्यभिचारात्" इत्याममनन्त ईश्वरा-

ऽनुमानेऽनुमेनिरे चिन्तामणिकृत इति ॥ अन्ये तु तत्त्वसाक्षात्कारादनन्तरं देहोच्छेदवारणाय तत्समुदायस्य नाङ्गीकुर्वन्ति कर्मनाशकताम्, अपि तु चरमस्य तेषाम्, कल्पयन्ति चैतदुपपत्तये तदवच्छेदिकां तत्र जातिम्। नच जीवन्मुक्तस्य संसारिणाऽविशेषः, मिथ्याज्ञानदोषयोर्विलयनात्। "क्षीयन्ते चास्य कर्माणि" इतिश्रुतेः "ज्ञानाग्निस्सर्वकर्माणि" इतिस्मृतेश्च ज्ञानस्याहत्यैव कर्मनाशकत्वमानुभविकमिति कृतं कायव्यूहाभ्युपगमेन। नच "नाभुक्तं क्षीयते कर्म" इति स्मृतिव्याकोपो, दुर्बलत्वात्। अत एव शारीरकमीमांसाभाष्ये ब्रह्मणि जगत्कारणत्वे श्रुतिभिस्साधिते साङ्ख्यादिस्मृतिविरोधोऽङ्गीकृत इति वदन्ति ॥ अन्ये तु प्रारब्धातिरिक्तानामेव कर्मणां ज्ञाननाश्यत्वमुपयन्ति, प्रतिपादयन्ति च निरुक्तश्रुतिस्मृतिघटककर्मपदस्य प्रारब्धातिरिक्तेषु कर्मसु लक्षकत्वं, दर्शितानुमानविरोधात् "अवश्यमेव भोक्तव्यम्" इति स्मृतौ च तत्पदं तत्त्वज्ञानप्रायश्चित्ताद्यनाश्येषु तेषु तथा श्रुतिविरोधात् एतदुभयमतेऽपि प्रारब्धभिन्नकर्मणां न भोग इत्यभिहितं भवतीत्यन्यत्र विस्तरः ॥ अथापरनिःश्रेयसस्योत्पादसमये परमपि निःश्रेयसं कुतो न जायत इत्याशङ्कायामाह। परन्त्विति। निःश्रेयसमित्यनुषज्यते ॥

पृष्ठे ५। पंक्तिः २२।

इदं सूत्रमितीति। केचित्तु योगविभागेन मिथ्याज्ञानानामित्यन्तमेकमुत्तरोत्तरेत्याद्यपरं सूत्रं स्वीकुर्वते। तदेकवचनेन प्रत्याख्यातम्, प्रपञ्चितमेतत्तात्पर्यटीकायाम्। उत्तरोत्तरमिति। एतच्च पाठापेक्षं बोध्यमन्यथा कारणस्य कार्योत्तरत्वाभावेनासङ्गतिः। तेषामपाय इति सति सप्तमी। तस्याश्च प्रयोजकत्वं प्रयोज्यत्वं वार्थोऽपायान्वयी ॥

पृष्ठे ५। पंक्तिः २३।

तत्सन्निहितस्येति। तथाच तदनन्तरपदं तत् अनन्तरं यस्येति विगृह्य समसनीयम्। यद्वा अन्तरं व्यवहितं, तदन्यदनन्तरं, तत्त्वञ्चाव्यवहितपूर्वसाधारणम् ॥

पृष्ठे ५। पंक्तिः २४।

प्रयोजकत्वमिति। आधेयतया प्रकृत्यर्थान्वितमेतन्निरूपकत्वेन प्रथमान्तार्थमन्वयते। ननु अपवर्गो न तदनन्तरापायादिति प्रयोग-

स्यैवं सति प्रामाण्यापत्तिः,नञर्थेऽत्यन्ताभावे पञ्चम्यर्थस्य प्रयोजकत्वस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैवान्वयस्याङ्गीकरणीयतया तादृशस्य चाभावस्यापवर्गे सद्भावात् । नच निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्याभावेऽन्वयितावच्छेदकसंसर्गत्वं सम्भवति, आधाराधेयभावानियामकस्य संसर्गस्य प्रतियोगितानवच्छेदकत्वात् अन्यथाऽतिरिक्तायाः प्रतियोगितायास्तत्र प्रमेयत्वाद्यनन्तधर्मसम्बन्धानां च कल्पनेऽतिगौरवं समापतेदित्यत आह—प्रयोज्यत्वं वेति । तथाच निरूपितत्वेन प्रकृत्यर्थविशेषितस्य प्रयोज्यत्वस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावेऽन्वयान्नोक्तापत्तिः । न च तथापि परमाणुपरिमाणान्नापवर्ग इतिवाक्यस्य प्रामाण्यानुपपत्तिः, पूर्वमतेप्येतस्याः प्रसक्तेः । परिमाणपदस्य परमाणुपरिमाणवृत्तौ लक्षकत्वस्याभ्युपगमेन पूर्वकल्पे सा समाधीयत इति चेत्, मयापि परिमाणनिरूपितत्वे लक्षकत्वमूरीकर्तुं शक्यत एवेत्येषा दिक् ॥ अथेहापायपदस्य ध्वंसेऽत्यन्ताभावे वाऽन्येषां नये च प्रागभावे तात्पर्यमग्रे व्यवस्थापयिष्यते, तथा च जनकत्वात्मकं प्रयोजकत्वं जन्यत्वात्मकं प्रयोज्यत्वं वा पक्षत्रये न सम्भवति विवक्षितुमतस्सर्वसाधारणं तन्निर्वक्ति, दण्डाभावेत्यादिना । एतेन स्वरूपसम्बन्धविशेषात्मकत्वे तस्य तादृशप्रतीतिरेवान्यथोपपत्तिमनासादयन्ती प्रमाणं दर्शितं भवति । न च स्वप्रतियोगिजन्यप्रतियोगिकत्वस्य प्रयोज्यत्वस्य पञ्चम्यर्थतोपगमे स्वरूपसम्बन्धविशेषात्मके तत्र मानाभाव इति वाच्यम् द्रव्याभावाद्घटाभावो दण्डाभावाद्द्रव्याभाव इत्यादि—प्रयोगस्य प्रामाण्यप्रसङ्गात् । यदि स्वनिष्ठानुयोगितानिरूपकनिरूपकतावच्छेदकावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकावच्छिन्ननिरूपकतानिरूपितानुयोगितावत्त्वेनोक्तप्रतियोगिकत्वपर्यवसितेन कथितप्रसङ्गश्शक्यत एव व्यावर्तयितुमित्युच्यते, तदा दारुणि द्रव्याद्दाहविरह इति प्रयोगप्रसञ्जनं निरपवादमेव, मण्यभावाभावत्वस्य मणिवृत्तित्वेन द्रव्यवृत्तितया तन्निरूपकनिरूपकतावच्छेदकीभूतमण्यभावत्वावच्छिन्नजनकतानिरूपितजन्यताया दाहे सत्त्वात् । न च पञ्चम्यर्थैकदेशानुयोगितायामाधेयतया प्रकृत्यर्थस्यान्वये प्रकृत्यर्थतावच्छेदकस्याप्यवच्छिन्नत्वसम्बन्धेनान्वयादत्रान्नैष दोष इति साम्प्रतम् , एवंसति हि मणेर्दाहाभाव इति प्रामाणिकप्रयुक्तयो व्याहन्येरन् । अस्तु वा यथाकथ-

श्चित्समाधानम्, परन्तु तथाविधप्रतियोगित्वस्य पञ्चम्यर्थत्वकल्पनापेक्षया स्वरूपसम्बन्धविशेषात्मकस्यैव प्रयोज्यत्वस्य तथात्वकल्पने लाघवमिति विभावनीयम् ॥

पृष्ठे ५ । पंक्तिः २५ ।

विरोधितयेति । समानविषयकत्वेनेत्यादि । न ह्यन्यावलम्बनं तत्त्वज्ञानमन्यत्रातात्त्विकीं धियं निवर्तयितुमलम् । न च घटतत्त्वसाक्षात्कारेणापैति रज्जौ सर्पत्वस्य विभ्रमः । अत एवेश्वरसाक्षात्कारस्य जगद्वीजजीवात्मगोचरमिथ्याज्ञानानिवर्तकस्यानुपयोगित्वमाशङ्क्य साक्षाददृष्टसापेक्षतया वा जीवात्मतत्त्वसाक्षात्कारसाधकत्वव्यवस्थापनं न्यायकुसुमाञ्जलिप्रकाशोक्तं सङ्गच्छते । नच पूर्वं वासनाजनितमिथ्याज्ञानस्य वर्तमानत्वेन कथङ्कारमनन्तरं तत्त्वसाक्षात्कारेण भवितव्यम्, तदभावनिर्णयस्य तद्विशिष्टबुद्धौ विरोधित्वादिति युज्यते वदितुं, सत्यपि विपरीतनिर्णये तद्व्याप्यवत्त्वदर्शनेन तस्य प्रत्यक्षनिर्णयोत्पादात्तदन्यबुद्धित्वस्यैव विपरीतनिर्णयप्रतिबध्यतावच्छेदकत्वात् । यद्यपि विपरीतज्ञानात्परमुत्पद्यमाने प्रत्यक्षनिश्चये व्याप्यवत्त्वनिश्चयस्य तद्विरहविशिष्टस्य विपरीतज्ञानस्य वा प्रतिबन्धकत्वमस्ति व्यवस्थापितम् एवञ्चान्तरेण विशेषदर्शनं तत्त्वसाक्षात्कारो नार्हति प्रभवितुं, परञ्च मननोपयोगिनस्साधर्म्यवैधर्म्यज्ञानस्य विशेषदर्शनात्मकतया तदाहितसंस्कारजन्यस्मरणसद्भावस्य कल्पनाज्ञानुपपत्तिः । अथ तथापि यथा पीतद्रव्यसमवधानदूषितलोचनश्शङ्खे श्वेतशून्यतां पश्यन् श्वैत्यव्याप्यशङ्खत्वेन शङ्खं जानन्नपि न तत्र श्वेतिमानं साक्षात्करोति दोषेण प्रतिबन्धात् । एवमेव मिथ्याज्ञानोत्पादितवासनादोषदूषिता मुमुक्षवो विहितश्रवणमननिदिध्यासना अपि नैव तत्त्वसाक्षात्कारमासादयेरन् इति चेत्, न, योगजधर्मेण मनस्सन्निकर्षेण च जनयितव्ये निरुक्तसाक्षात्कारे वासनाया विरोधित्वस्यानभ्युपगमात् । अतएव दिङ्मोहादावपि साक्षात्कारस्य नासम्भवः । नहि प्रमितिं प्रति दोषविरहस्य कारणता शक्येत कल्पयितुमेकेन रूपेण, तेषामननुगमात् ॥

पृष्ठे ५ । पंक्तिः २६ ।

मिथ्याज्ञानइति । सवासनइत्यादि, समानविषयकविरोधिज्ञानस्य संस्कारनाशकत्वात् । अधुना तु वासनाया दोषपदेनाग्रहणा-

ऽग्रिमग्रन्थस्य " तस्याश्च मिथ्याज्ञाननाशात् " इत्यस्य विरोधः ।
नच व्यतिरेके व्यभिचारेण न मिथ्याज्ञानध्वंसे तत्त्वसाक्षात्कारत्वेन
हेतुत्वं, विभुयोग्यविशेषगुणानां स्वोत्तरवर्तिना गुणेनैव नाश्यत्वस्य
क्लृप्तत्वादिति वाच्यम्, मिथ्याज्ञानप्रागभावासामानाधिकरण्यस्य त-
त्कार्यतावच्छेदकघटकत्वोपगमात्, तत्त्वसाक्षात्कारे जाते समाधिना
प्रमाणेन चानुगृहीततया विषयसन्निकृष्टेन्द्रियजन्यतया च प्रबलेन तेन
प्रतिरोधादनन्तरं नोदेतुमर्हति मिथ्यामतिः ( सत्यामपि वासनायां )
किन्तु पूर्ववृत्तायां तत्र भ्रमत्वस्य ग्रहस्तस्यास्तदाहितवासनायाश्च नि-
वृत्तिः तत्त्ववासना च, ततो न मिथ्याज्ञानमुत्पत्तुमीष्टे वासनाविरहा-
दिति मिथ्याज्ञानप्रागभावासामानाधिकरण्यं मिथ्याज्ञानध्वंस उपप-
द्यते। एतेन भ्रममात्रस्य ज्ञानसाधारणकारणातिरिक्तकारणजन्य-
त्वनियमेपि वासनादोषवशात् तत्त्वसाक्षात्कारान्मिथ्याज्ञाने विलय-
मुपगतेऽपि तदन्तरेण भवितव्यम्, नच तत्त्वसाक्षात्कारेण तच्छक्येत
प्रतिरोद्धुं दोषविशेषप्रभवत्वात्, जन्यज्ञानमात्रस्य क्षणिकत्वेन तद-
सद्भावदशायामापादनीयत्वाच्च, तथाच तदनन्तरं रागादिना
विहितया निषिद्धया वा क्रिययाऽदृष्टस्योत्पादान्मोक्षानुपपत्तिरिति
पूर्वपक्षो निरस्तः। यत्तु वासनाया मिथ्याज्ञानजनकत्वमेव न स-
म्भवति तस्या अपि मिथ्याज्ञानान्तरजन्यत्वेनानवस्थानादिति, तन्न,
बीजाङ्कुरयोरिवात्रापि तस्य प्रामाणिकत्वात् ॥

कारणाभावाच्चेति। रागद्वेषौ प्रति मिथ्याज्ञानस्य निमित्तत्वम-
न्वयव्यतिरेकाभ्यां ग्राह्यम् तदेतत् " तेषां मोहः पापीयान् नामूढस्ये-
तरोत्पत्तेः" इतिसूत्रे ( न्या. ४ अ. १ आ. ) स्पष्टम्। न चान्वयव्य-
भिचारः सत्यपि मिथ्याज्ञाने कदाचिद्रागादेरनुदयादिति देश्यमेवं स
ति कपालादीनामपि कलसादौ कारणत्वं न स्यात् युक्तिसाम्यात्, त-
स्मात् कार्याभावाधिकरणनिरूपितस्वस्वेतरयावत्कारणसमवधा-
नावच्छेदकक्षणावच्छिन्नवृत्तित्वस्यैवान्वयव्यभिचारत्वं वाच्यम्, तच्च
प्रकृतेऽपि न प्रसज्यते। नचैवमपि व्यतिरेकव्यभिचारो दुर्वार एव
मिथ्याज्ञानविधुरेषु तत्त्वज्ञेषु जनकादिषु रागादिश्रुतेरिति शङ्कयितुं
शक्यम्, भवेदेतदेवं यदि रागत्वादिनैव मिथ्याज्ञानकार्यताऽवच्छिद्येत,
नचैवं, रागादिगतवैजात्यस्य विषयताविशेषनिरूपकरागत्वस्य वा
तदवच्छेदकत्वात् नह्येतेन वैजात्येन विषयताविशेषेण वाऽऽश्रीयते
रागादि तत्त्वज्ञानाम् ॥ निवृत्त इति। दोषप्रागभावासमानाधिकर-

णां ध्वंसस्त इत्यर्थः स्योत्तरयतीति। गुणेन निवृत्त्यासने उपेक्षणीयतया विष-
येषु दोषभावनापरीपाकजनितया तत्परिजिहीर्षया तेषु तृष्णायास्त-
त्प्रतिकूलगोचरद्वेषस्य च नाशात् प्रत्यक्षयोश्च तयोर्मिथ्याज्ञानस्य वि-
लयेनोत्पत्त्यसम्भवात् ॥

पृष्ठे ५। पंक्तिः २७।

धर्माधर्मात्मकायाइति। सूत्रे प्रवृत्तिपदं नोत्कटरागजन्यं प्रय-
त्नविशेषं प्रभवति प्रतिपादयितुं, व्यापारितयैतस्यादृष्टेन व्यापारेणा-
न्यथासिद्धत्वस्य जन्मनि विरहेण हेतुत्वस्य सत्त्वेऽपि अभावयोः प्रयो-
ज्यप्रयोजकभावे कथन्नाकाङ्क्षा समुदयेत, तन्निवर्तकस्य दुःखजन्मादृ-
ष्टप्रवृत्तीतिक्रमेणाभिधानस्याकृतत्वेन न्यूनत्वं स्यात्, अन्यथा ताव-
त्पर्यन्ताभिधानस्यापि वैयर्थ्यमेव प्रसज्येत इतिधर्माधर्मपरत्वं तत्पद-
स्यानुश्रितम्। केचित्तु अदृष्टजनकत्वविशिष्टक्रियालक्षकत्वमाहुः
तदप्युक्तार्थ एव पर्यवस्यति। अनुत्पत्ताविति। उत्पत्त्यभाव इत्यर्थः।
उत्कटेन रागेण द्वेषेण वा वियुक्ता विहितं प्रतिषिद्धं च समाचरन्तोऽपि
नो सुकृतीभवन्ति नो वा प्रत्यवयन्ति, अवियुक्ताश्च तथा. अतो दोष-
स्यादृष्टं प्रति कारणत्वम् तथा च भोगेन कर्मणां जायमानो ध्वंसस्त-
त्प्रागभावासमानाधिकरणो भवतीति भावः। तदभावाच्चेति। निरु-
कध्वंसादित्यर्थः। विशिष्टशरीरसम्बन्धस्येति। विजातीयशरीराद्य-
प्राणसंयोगस्येत्यर्थः॥

पृष्ठे ५। पंक्तिः २८।

अभावादिति। जन्मप्रागभावासमानाधिकरणाज्जन्मनो ध्वंसा-
दित्यर्थः॥ दुखाभावादिति। दुःखप्रागभावासमानाधिकरणाद्दुःख-
ध्वंसादित्यर्थः। न च जन्मपदोपादानं सूत्रे विफलं प्रवृत्त्यभावादेव
दुःखाभावोपपत्तेरिति वाच्यम्, कथन्तानिवृत्तये, धर्माधर्मप्रकल्पयि-
तृसुखादिप्रयोजयति जन्मान्तरे सम्भावनाया निरासाय वा तदुपादा-
नात्। ननु जन्मनोऽपाये दुःखस्यापायवत्सुखस्यापि तत्सम्भवादपवर्गे
द्वेषोदयेनेच्छोत्पत्त्यभावात्प्रवृत्त्यनुपपत्तिरिति चेत्, न, तत्त्वज्ञानपद-
व्याख्यायां कृततत्समाधानस्याभिहितत्वात्॥

पृष्ठे ५। पंक्तिः २९।

अथ स्यादेवं यदि नाम धर्मादिकं प्रति दोषाणां साधनत्वं स्यात्
तदेव न सम्भवति, तदवच्छेदकस्य दुर्वचत्वात् तद्धि दोषत्वं वा उत्क-

टरागद्वेषयोरन्यतरत्वं वा प्रत्येकरूपं वा, नाद्यः, दोषत्वस्य धर्माधर्मात्मकप्रवृत्तिजनकत्वलक्षणत्वेनात्माश्रयप्रसङ्गात् । न द्वितीयः, सहकारिनियमानुपपत्तेः धर्मादौ जनिकायास्तत्तत्क्रियाया असमवधानेऽपि क्रियान्तरेणोत्कटरागगोचरेण तदुपधानात् एवञ्च तत्तत्क्रियामनपेक्षमाणेन निरुक्तान्यतरेण धर्माद्यापत्तिः, अतएव वह्न्यनुकूलशक्तिमत्त्वेनैकरूपेण तृणारणिमणीनां कारणत्वं प्रत्याख्याय तत्तज्जन्यतावच्छेदकतया वैजात्यत्रयं कुसुमाञ्जलौ व्यवस्थापितमाचार्यचरणैः, वस्तुतोऽन्यत्र क्रियायामुत्कटरागादिसत्त्वेऽन्यक्रियया तदुत्पादप्रसङ्गः । नापि तृतीयः, तत एव । एतेन कार्यतावच्छेदकमपि धर्मत्वादि प्रत्येकं वा तदुभयसाधारणमन्यद्वा किञ्चिन्न सम्भवतीत्याशयेनाशङ्कते. यद्यपीति । तत्तत्क्रियाजन्यधर्मादिकं प्रति तत्तत्क्रियागोचरोत्कटरागत्वेन, क्वचित् क्रियाविशेषजन्याधर्मं प्रति तत्तदुत्कटद्वेषत्वेन हेतुत्वमिति नोक्तदोषावकाश इति समाधत्ते. तथापीति । तत्तद्दोषाणाम् । तत्तत्क्रियागोचरोत्कटेच्छानां, तत्तदुत्कटद्वेषाणां वा । 'तत्तद्धर्मादिहेतुत्वात्, तत्तत्क्रियाजन्यधर्मादिहेतुत्वात् । यत्तु तत्तद्व्यक्तिं प्रति तत्तद्व्यक्तित्वेन हेतुत्वमित्यभिप्रायकोऽयं ग्रन्थ इति । तन्न, वस्तुत इत्यग्रिमसन्दर्भविरोधापत्तेः, तत्तद्व्यक्तिपदेन गङ्गाजलसंयोगजधर्मग्रहणस्यानावश्यकत्वाद्विति ध्येयम् ॥

पृष्ठ ६ । पंक्तिः १ ।

संयोगादिवदिति । आदिनाऽस्पृश्यस्पर्शादीनां परिग्रहः, धर्मादीत्यादिना चाधर्मस्य ॥

पृष्ठे ६ । पंक्तिः २ ।

व्यभिचारइति । निरुक्तकार्यकारणभावे व्यतिरेकव्यभिचार इत्यर्थः । स च कार्यसमानाधिकरणाभावप्रतियोगित्वम् । तन्निश्चयश्च तदभावरूपकारणताया ज्ञाने बाधनिश्चयविधया संशयस्तु तस्यास्संशयसामग्रीसम्पादकतया साक्षात्कारे विरोधीति बोध्यम् । तथा च व्यभिचारेण कार्यकारणभावे विघटिते न दोषापायतः प्रवृत्तिरपेयादिति भावः। अत्रदोषइति । अत्र, एतस्मिन् सूत्रे । घटकत्वं सप्तम्यर्थः । 'दोषः' दोषपदप्रतिपाद्यः, एतत्सूत्रघटकेन दोषपदेन प्रतिपाद्य इति यावत् । एवञ्चैतस्यैव दोषस्य धर्मादिजनकत्वं कल्प्यते

व्यभिचारविरहात्। न च दर्शितदिशाऽत्रापि सहकारिनियमानुपपत्तिरिति वाच्यम्, तत्तत्क्रियाजन्यधर्मत्वादेर्मिथ्याज्ञानजन्यवासनायाः कार्यतावच्छेदकत्वाभ्युपगमेन तत्तत्क्रियायां सहकारित्वस्य सद्भावे बाधकाभावात्॥

पृष्ठे ६। पंक्तिः ३।

नाशइति। आत्यन्तिको ध्वंस इत्यर्थः, मिथ्याज्ञानविरहेऽपि वासनाया उत्पत्तुमनीशतया तत्प्रागभावविशिष्टत्वस्यायोगात्। एवञ्च ततश्चरमभोगात्परमात्यन्तिकः प्रवृत्तेर्ध्वंसोऽत्यन्ताभावो वा, अथ च तथाविधो जन्मनः, ततश्च तादृशो दुःखस्य ध्वंस इति सर्वं चतुरस्रम्। अत्र वाकारोऽनास्थायां, मिथ्याज्ञानापायेन दोषापायं प्रतिपादयतस्सूत्रस्य विरोधापत्तेः। अतएव वदन्तीत्यभिहितम्॥

पृष्ठे ६। पंक्तिः ४।

'स एव, दुःखापाय एव। सः अपवर्गः। अभेदइति। नचैतदर्थकत्वं पञ्चम्या अदृष्टचरमिति दर्शनीयम्, "तत्साक्षादपरोक्षात्" इति (बृ०) श्रुतौ तस्या अभेदार्थकत्वस्य प्रतिपादितत्वात्॥

पृष्ठे। ६ पंक्तिः ५।

ननु छन्दसि तादृश्याः पञ्चम्यास्सत्त्वेऽपि लोके विरह एवेति प्रयोज्यत्वार्थकत्वमेव तत्राश्रयितुमुचितम्, तथा चोक्तानुपपत्तिरत आह, अपवर्ग पदं वेति। अयं परमपवृक्त इति व्यवहारे प्रामाणिके यथोक्तदुःखापायस्य व्यवहर्तव्यविधया प्रयोजकत्वमक्षतमिति भावः॥

पृष्ठे ६। पंक्तिः ७।

दुःखानुत्पत्तेरित्यादि। अयमभिसन्धिः सूत्रेऽपायपदेन प्रागभाव एव विवक्षितः। तथा च तत्त्वसाक्षात्कारान्मिथ्याज्ञानस्य प्रागभावः। तस्माच्च दोषस्य, ततश्च प्रवृत्तेः, अतो जन्मनः, अस्माच्च दुःखस्य, ततश्च चरमत्वेन विशेषितो दुःखध्वंसोऽपवर्गः। यद्यपि दुःखध्वंसे विशेष्ये न दुःखप्रागभावस्यानुकूलत्वं, परन्तु विशेषणीभूते स्वसामानाधिकरण्यस्वसमानकालिकत्वोभयसम्बन्धेन दुःखविशिष्टान्यत्वरूपे चरमत्वे, विशिष्टप्रयोजकत्वं स्वविशेषणप्रयोजकस्यापि न्याय्यमेवेति न पञ्चम्या असङ्गतिः। ननु प्रागभावस्याजन्यतया कथं तत्त्वसाक्षात्कारात्तस्य सम्भव इति चेत्, न, मिथ्याज्ञानासमानाधिकरणत्वविशिष्टस्य तस्य

जन्यत्वोपगमात्। एतेन निर्विशेषस्य मिथ्याज्ञानप्रागभावस्यातत्त्वज्ञसाधारणत्वेन व्यभिचारशङ्काऽपि परास्ता। एवमुत्कटरागाद्यसामानाधिकरण्यं तत्प्रागभावे धर्मजन्यदुःखोत्पत्त्यसामानाधिकरण्यं तत्तत्प्रागभावे निवेश्य प्रयोज्यप्रयोजकभावो निर्वाच्यः। नचैतेषां प्रागभावस्यानाश्यत्वे प्रागभावत्वानुपपत्तिः तस्य विनाश्यभावत्वात्मकत्वात् विपर्यये च भावोन्मज्जनापत्तिरिति वाच्यम्, प्रतियोगिजनकाभावत्वस्यैव प्रागभावलक्षणत्वात्, जनकत्वञ्च योग्यत्वं विवक्षणीयम्, नातः प्रतियोगिफलोपधायकत्वस्य तत्र विरहेऽपि निरुक्तानुपपत्तितादवस्थ्यम्॥

पृष्ठे ६। पंक्तिः ८।

अत्र मिथ्याज्ञानादीनां कदाचिदप्यनुत्पादेन तत्प्रागभावकल्पनायां मानविरह इत्यरुचिसूचनाय कश्चित् इत्युक्तम्। केचित्तु 'स एवासः' इत्यस्य दुःखप्रागभाव एव जन्मापायप्रयोज्योऽपवर्ग इत्यर्थं मन्यन्ते, तदपरे न क्षमन्ते, कथितयुक्त्या तत्प्रागभावकल्पनायां प्रमाणासद्भावात् "तदत्यन्त विमोक्षोऽपवर्ग" इतिसूत्र (न्या. १ अ. १ आ. २२ सू.) वृत्तिविरोधापाताच्चेति॥

अथ क्रमप्रतिपादनार्थश्चेदं सूत्रं दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामित्येवमादि, इतिवार्तिकेन, "अत्रेदं सिद्धान्तसूत्रमुपतिष्ठते दुःखजन्मेति" इति तात्पर्यटीकया च "तत्त्वज्ञानात्" इति भाष्यभागेनागर्भितस्यैव दुःखजन्मेत्यादेः सूत्रत्वमवधार्यते। अन्ये तु यत् "तदनन्तराभावादपवर्ग" इत्यस्यैव सूत्रावयवत्वं स्वीकुर्वते। तदेव वयमपि युक्तमुत्पश्यामः, एतत्सूत्रवार्तिकस्य तात्पर्यव्याख्यायां योगविभागप्रकरणे, न्यायमञ्जर्याञ्च तथैव स्पष्टतयोल्लेखदर्शनात् इति॥ २॥

पृष्ठे ६। पंक्तिः १०।

यथोद्देशमिति। एतेन प्रमाणप्रमेयादिलक्षणाद्यभिधानपौर्वापर्यविपर्ययस्य विनिगमनाविरहविहिताया आशङ्कायाः प्रत्यादेशो वेदितव्यः।

पृष्ठे ६। पंक्तिः ११।

विभजते चेति। निखिलेषु प्रमाणेष्वनुगतानतिप्रसक्तधर्मस्य साक्षाद्व्याप्यधर्मैः धर्मिप्रमाणं प्रतिपादयतीत्यर्थः। नचैतद्वते लक्षणस्य बोध-

नात्सम्भवति, प्रमाणस्य भावमविद्वांसं प्रति हि तत्र शक्येत विभ-
ज्तुमिति तल्लक्षणज्ञापनमावश्यकम् । तच्च विभागपरेषु सूत्रेषु
क्वचित् यौगिकशब्दोपसन्दानात् क्वचिच्चार्थतो बोध्यम्। यत्र वि-
भागतोऽन्यस्मादेव भागाल्लक्षणं लभ्यते तत्र लक्षयतीत्यभिधाय
विभजते इति। यत्र च विभागत एव तथा तत्र विपरीतं निरूप्यते
वृत्तिकृतेति न पूर्वापरलेखविरोधः । अथ विभागवाक्ये सङ्ख्या-
भिधायकपदगर्भितत्वनियमेन प्रकृते तथाविधपदस्याभावादुक्तवा-
क्यत्वानुपपत्तिरिति चेत्, न, उपजीव्यभूतभाषितनियम एव
प्रमाण[illegible]नात् ॥

पृष्ठे ६। पंक्तिः १३।

'अत्र, [illegible]णानीत्यत्र सप्तम्या प्रतिपाद्यमानं घटकत्वं प्रशब्द-
विशिष्टेन माधातुनेत्यत्र धातुमन्वयते। वैशिष्ट्यञ्चाव्यवहितोत्तरत्व-
सम्बन्धेन। एतेनोपसर्गस्याकाङ्क्षासम्पादकत्वं तात्पर्यानुमापकत्वं वा
न तु किञ्चिदर्थे वृत्तिमत्त्वमिति सूचितम् तस्य वृत्तिमत्त्वे तेन
धातुना च जनयितव्योपस्थितिद्वयी विभिन्नविषयकं प्रत्यक्षं प्रति
प्रतिबन्धकतावच्छेदककुक्षौ निक्षेपणीयेति गौरवम्, धातोर्विशिष्टार्थ-
कत्वपक्षे चैकस्या एवोपस्थितेस्तत्र प्रवेशेन लाघवमित्यादिका
युक्तयोऽन्यत्रोपपादिता जिज्ञासुभिरालोचनीयाः ॥ तद्वतीत्यादि ।
सर्वांशे भ्रमात्मके ज्ञाने, तदेककरणे च प्रमातत्करणलक्षणयोरति-
प्रसक्तिव्युदासाय विशिष्टान्तम् ज्ञानविशिष्टमिति तत्पर्यवसितार्थः।
वै० स्वीयप्रकारताविशिष्टविशेष्यतानिरूपकत्व-स्वीयनिरवच्छिन्न-
प्रकारताविशिष्टतादृशविशेष्यतानिरूपकत्वान्यतरसम्बन्धेन। उभ-
यत्र वैशिष्ट्यं स्वनिरूपितत्वस्वविशिष्टनिरूपकताधिकरणतासामा-
नाधिकरण्याभ्याम्। इयांस्तु विशेषः आद्ये वैशिष्ट्यं स्ववृत्तित्व-स्वा-
नवच्छेदकानवच्छिन्नत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामा-
नाधिकरण्यैतत्सम्बन्धचतुष्टयेन, वृत्तित्वन्तु स्वानवच्छेदकानव-
च्छिन्नत्वेन। द्वितीये तु स्वव्यापकत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वा-
भ्याम्। प्रत्येकसम्बन्धमपहाय अन्यतरसंसर्गविवक्षणात्सावच्छि-
न्नाया निरवच्छिन्नाया वा प्रकारताया निरूपकस्य ज्ञानस्य वा सङ्ग्रहः।
स्वसामानाधिकरण्यमात्रं परित्यज्य स्वविशिष्टत्वस्य निरूपक-
तायां प्रवेशात् गुणो विशिष्टसत्तावानिति भ्रमस्य व्यावृत्तिः।

व्याप्यत्वस्य निवेशनाच्च निरूपकताया अवच्छेदकभेदेन भिन्नत्वमते घटेतरत्र स्वरूपतो घटत्वभ्रमस्य न तदाश्रितां प्रमेयत्वाद्यवच्छिन्ननिरूपकतामादाय संग्रहः। वस्तुतस्तु स्वतादात्म्य-स्वीयप्रकारताविशिष्टविशेष्यताकत्वोभयस्य ज्ञानवैशिष्ट्यघटकत्वं लाघवादङ्गीकरणीयम्। वै०स्वनिरूपितत्व-स्वव्याप्यनिरूपकतानिरूपिताधिकरणतावद्वृत्तित्वाभ्याम्।

न च गुणो विशिष्टसत्तावानितिज्ञानस्य प्रमात्वापत्तिरिष्टत्वात् सर्वांशे भ्रमस्यैवालभ्यत्वात्। ननु निर्विकल्पकस्य प्रमात्वानुपपत्तिरिति चेत् न इष्टत्वात् निर्विकल्पकं प्रमाऽप्रमाबहिर्भूतमिति तत्त्वचिन्तामणावभिधानात्। तत्करणे प्रमाणत्वन्तु सविकल्पकमादायोपपादनीयमिति दिक्॥ सौगतास्तु प्रवृत्तिनिवृत्त्यन्यतरानुकूलज्ञानत्वमेव प्रमात्वमनुमन्यन्ते। अन्यथाख्यातेः स्थले विशेषणविशेष्ययोर्ज्ञानयुगलस्य भेदाग्रहस्य चाभ्युपगमो ननु तस्या इत्यनुभवत्वमेव तदिति प्राभाकराः। 'अनधिगताबाधितार्थविषयकज्ञानत्वं तदिति भट्टपादाः, द्वैतविभ्रमकालावच्छेदेनाबाधितानधिगतार्थगोचरज्ञानत्वं तादृशाबाधितार्थविषयकज्ञानत्वं वा तदिति वेदान्तिनः, विषयाकारपरिणतेन्द्रियवुद्धिवृत्त्यनुपातिनी पुरुषमुपरञ्जयन्ती बुद्धिवृत्तिस्तत्त्वं तदिति साङ्ख्याः। एतदेव च पातञ्जलाः। त एते विस्तरभयान्न निरस्यन्ते॥

पृष्ठे ६। पंक्तिः १४।

तत्करणत्वमिति। तद्विभाजकधर्मावच्छिन्नकार्यतानिरूपितकरणत्वमित्यर्थः। तेन नात्मशरीरादेर्जन्यज्ञानत्वावच्छिन्नजनकस्य प्रमाणत्वापत्तिः। करणत्वञ्च कार्योपधायकव्यापाराव्यवहितप्राक्क्षणावच्छेद्यकार्यतावच्छेदकसम्बन्धावच्छिन्नकार्याधिकरणतावन्निरूपितकारणतावच्छेदकसम्बन्धावच्छिन्नाधेयतावद्वृत्तित्वविशिष्टकारणत्वम्। नच श्रोत्रस्य करणत्वानुपपत्तिस्समवायस्य नित्यत्वादिति वाच्यम् श्रोत्रावच्छिन्नशब्दस्य श्रोत्रेण मनस्संयोगस्य श्रोत्रावच्छेद्यसमवायस्य वा व्यापारत्वकल्पनात्। नन्वेवमपि एतस्य चक्षुरादेश्च करणत्वं न स्यात् व्यापाराव्यवहितप्राक्क्षणावच्छेदेन विषयतया कार्याधिकरणे तस्याप्रत्यासन्नत्वादिति चेत्। न उत्पत्तिक्षणसाधारणस्याव्यवहितपूर्वत्वस्य विवक्षितत्वात। केचित्तु फलोपधायकं कारणमेव

करणम्, आत्मादीनां करणत्वमिष्टमेव अतएव "आत्मानमात्मना वेत्सि" इति प्रयोगस्यापि प्रामाण्यमुपपद्यते। नच कर्तुरपि करणत्वे कारकस्य विभागो व्याहन्येत, उपधेयसङ्करेऽप्युपाधेरसङ्करात् इत्याहुः। शिवादित्यमिश्रास्तु करणत्वमखण्डोपाधिरूपमिति वदन्ति। तच्चिन्तनीयम्॥

कारणत्वञ्चानियतपूर्ववर्तिनो ये येऽन्यथासिद्धास्तत्तद्‌व्यक्तिभेदकूटवत्त्वे सति नियतपूर्ववर्तित्वम्। अन्यथासिद्धत्वञ्च लघुनियतपूर्ववर्तिनो ये ये तत्तद्‌व्यक्तिभेदकूटवत्त्वम्। लघुत्वञ्चेदमस्माल्लघु इतिप्रतीतिसाक्षिकस्वरूपसम्बन्धविशेषोऽन्यद्वा। तच्च चतुर्विधं शरीरेण सम्बन्धेनोपस्थित्या कल्पनया विहितमिति। कार्याभावप्रयोजकतावच्छेदकानुयोगितानिरूपितप्रतियोगितावत्त्वं, पदार्थान्तरं वा कारणत्वमित्यन्ये तच्च कार्येषु कादाचित्कत्वस्यान्यथानुपपत्याऽभ्युपगम्यते नित्यालीकयोरहेतुकयोस्तस्यायोगात् इति कुसुमाञ्जलौ विस्तरतः प्रतिपादितमित्यलमधिकेन॥ अनुभववित्ति। तत्त्वञ्च संस्कारमात्रजन्यज्ञानान्यज्ञानत्वमनुभवामीति प्रतीतिसाक्षिको जातिविशेषो वा। विवक्षित इति। धातोर्लक्षणयेत्यादि॥

पृष्ठे ६। पंक्तिः १५।

स्मृतिकरण इति। संस्कारद्वारा तस्याः करणे प्रात्यक्षिकाद्यनुभव इत्यर्थः। संस्कार इति वा यदसाधारणं सहकार्यासाद्यमनोबहिगोचरां प्रमां जनयति तस्यैव प्रमाणत्वनियमात्। नचेष्टापत्तिः प्रमाणानां चातुर्विध्यस्य व्याघातप्रसङ्गात्॥ केचित्तु स्मृतिव्यावर्तनायागृहीतग्राहित्वं ज्ञाने विवक्षन्ति परं न चैष पक्षः क्षोदक्षमः तथाहि किमिदमगृहीतग्राहित्वं नाम न तावज्ज्ञानाविषयविषयकत्वं स्वपूर्वोत्पन्नज्ञानाविषयविषयकत्वं वा, अप्रसिद्धेः। नापि स्वसामानाधिकरण्य-स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वाभ्यां स्वविशिष्टज्ञानाविषयविषयकत्वं, सर्वत्र ज्ञाने कालभाने प्रमाणस्यासद्भावेन धारावाहिकबुद्धावव्याप्तेः, ईश्वरज्ञाने तदनभिमतस्य प्रमात्वस्यापत्तेश्च, अतएव यज्जातीयविशिष्टज्ञानत्वावच्छेदेन स्वसमानाकारकनिश्चयोत्तरत्वं तज्जातीयान्यमेव तदिति समाधानमप्यनादेयम्॥

सूत्रे प्रमाणानीति। नियतवचनकान्यविशेष्यबोधकपदोत्तरविभक्तिजन्यबोधविषयत्वप्रकारतानिरूपितवक्तृसमवेतेच्छीयविशेष्यताश्रय-

सङ्ख्याभिन्नसंख्याविषयकबोधजनकत्वप्रकारतानिरूपिततादृशविशे-ष्यता विरहवद्विभक्तिप्रकृतिभूतस्य विशेषणबोधकपदस्यैव विशेष्य-बोधकपदोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्तिप्रकृतित्वनियमेनानाका-ङ्क्षत्वात्प्रमाणानीति बहुवचनोपपत्तिः प्रमाणेऽवच्छेदकभेदभिन्नप्रमि-तिकरणतायाश्चैकत्वस्य बाधेन विवक्षितुमशक्यत्वात् ॥

विभाग इति। एतमभिदधति स्म न्यायमञ्जरीकृतः "एकेनानेन सूत्रेण द्वयं चाह महामुनिः। प्रमाणेषु चतुस्सङ्ख्यं तथा सामान्यलक्षणम्" इति। नच विभागस्य वैयर्थ्यं, प्रत्यक्षादीनां चतुर्णां लक्षणस्य तत्तत्सू-त्रेणाभिधानादेवेतरप्रमाणव्यवच्छेदसिद्धेरिति वाच्यम्, सतोऽपि हि प्रमाणस्य लक्षणानभिधानसन्देहो विभागेन विना विनिवर्तयितुं न शक्येत, एवञ्चार्थापत्त्यनुपलब्धिसम्भवैतिह्यचेष्टाप्रातिभादीनां प्रमा-णान्तरत्वं व्यवच्छिन्नमित्यवधेयम् यथा चैतत्तथा परीक्षायां वक्ष्यते ॥ अथैतस्य सूत्रस्य लक्षणविभागोभयपरत्वे वाक्यभेदः, "अर्थैक्यादेकं वाक्यम्" इति जैमिनिनाऽभिधानादिति चेत्, न प्रमाणपदस्य यौगि-कतया तदर्थस्य प्रत्यक्षादावन्वयेनैकवाक्यत्वात्ततः प्रमितिकरणत्वे सर्वानुगतत्वस्यान्वयबलादधिगमेन सामान्यलक्षणत्वस्याक्षिप्तत्वात्। केचित्तु "सूत्रेष्वनेकार्थविधेर्वाक्यभेदो न दूषणम्" इतिचिरन्तनोक्त्या पुरोक्तविनामापत्तिं सोत्साहं सहन्ते ॥

पृष्ठे ६। पंक्तिः १६।

प्रत्यक्षेत्यादि। बहुतरवादिसम्मतत्वेनाशेषैः प्रमाणैरुपजीव्यत्वेन च तेषु ज्येष्ठत्वात्प्रथमं प्रत्यक्षस्य, तदुपजीवकत्वेन बहुवादिस्वी-कृतत्वेनोपमानशब्दोपजीव्यत्वेन च ततः परस्तादनुमानस्य, स्मरण-सहकारितयाऽनुमानसाधर्म्यादथोपमानस्य परिशेषात्ततश्शब्दस्यो-द्देश इति ध्येयम्। ननु सोद्देशपदार्थलक्षणच्छलपरीक्षायाः प्रथमाध्या-यार्थत्वं वृत्तिकृता प्रथमसूत्रव्याख्यायामभिहितमिति पदार्थविभागस्य तेष्वनन्तर्भावादभिधानमसङ्गतमित्याशङ्कां निराकुरुते, विभागस्ये-त्यादिना। उपपादितमेतत्पुरैव प्रथमसूत्रवृत्तिव्याख्यायामस्माभिरिति॥

अथैतस्य सूत्रत्वन्तु "अथोद्दिष्टविभागद्वारेण सूत्रं प्रत्यक्षानुमानो-पमानशब्दाः प्रमाणानि" इति वार्तिकात् "नचैतत्सूत्रमस्य लक्षण-परमिति तात्पर्यटीकातः "नन्वेकस्य सूत्रस्य" इति जयन्तभट्टाभिधा-नाच्चावगम्यत इति ॥ ३ ॥

पृष्ठे ६ । पंक्तिः १९ ।

लक्षयितुमिति । एतेनैतत्सूत्रस्य कारणावधारणार्थतायामात्ममनस्संयोगादेरनुक्त्या न्यूनत्वमिति निरस्तम् ।

पृष्ठे ६ । पंक्तिः २२ ।

प्रतिगतमित्यादि । "कुगतिप्रादयः" इत्यनेन समासः । विषयसन्निकृष्टमिन्द्रियमित्यर्थः ॥

पृष्ठे ६ । पंक्तिः २३ ।

नन्वयं समासः प्रमितिमपि प्रतिपादयितुं प्रभवति प्रात्यक्षिकीम् अक्षमिन्द्रियं प्रति गतत्वस्य जनकतया तस्यामक्षतत्वादत आह. प्रस्तुतत्वाच्चेति ॥

पृष्ठे ६ । पंक्तिः २४ ।

यत इत्यध्याहारेणेति । व्यवसायात्मकमित्यनन्तरं यतस्तदित्यध्याहारेणेत्यर्थः, यत्तदोः प्रायेण नित्यसम्बन्धात्, तेन नानन्वयप्रसङ्गः ॥ अध्याहारे गौरवात्प्रकारान्तरेण समाधत्ते, प्रत्यक्षेति ॥

पृष्ठे ६ । पंक्तिः २५ ।

सुज्ञेयमिति । तथा च करणलक्षणानभिधानेऽपि न क्षतिः । नहि स्फुटेषु विषयेषु प्रेङ्खयन्ति लेखनीं मूलकृतः अतएव हेत्वाभासचिन्तामणौ दुष्टलक्षणस्य प्रतिश्रुतत्वेऽपि तदुपेक्ष्य दोषलक्षणस्याभिधानं सङ्गच्छते । नच सन्निकर्षद्वारकेन्द्रियजन्यप्रमितिकरणत्वस्य प्रत्यक्षप्रमाणलक्षणत्वप्रतिपादनमक्षपादस्य द्रविडदेशजातद्विजातिप्राणायामपरिपाटीं विडम्बयति इन्द्रियत्वस्यैव हि तथात्वं प्रदर्शयितुमुचितं लाघवादिति व्यपदेश्यम् भ्रममात्रकरणस्य खण्डचक्षुषः प्रमाणत्वमेवंसति प्रसज्येत, किञ्चेन्द्रियस्यानुमानादिभ्यः प्रमाणान्तरता न विना प्रमितिवैजात्यप्रदर्शनान्निर्विचिकित्समासादयितुं शक्येतेति तथोपन्यासस्य नायुक्तता ॥ सूत्रे, इन्द्रियार्थेत्यादि । इह इन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारिज्ञानमव्यपदेश्यं व्यवसायात्मकं प्रत्यक्षमिति योजना कार्या । तत्र प्रत्यक्षमिति लक्ष्यनिर्देशः, ज्ञानान्तं लक्षणम्, इतरच्च विभागपरम् । इन्द्रियाणि वक्ष्यमाणानि । तत्त्वञ्च न जातिः पृथिवीत्वादिना साङ्कर्यात्, किन्तु

स्मृत्यजनकज्ञानकारणमनस्संयोगाश्रयत्वम्, शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनस्संयोगाश्रयत्वमखण्डोपाधिर्वा । अर्थपदं ज्ञानपदसमभिव्याहारेण लक्ष्यत्वेनाभिमतज्ञानविषयपरम् । सन्निकर्षः सम्बन्धविशेषः स च षोढा भिद्यते संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायो विशेष्यविशेषणभावश्चेति वार्तिककृतः तत्र घ्राणरसनयोस्संयुक्ते तत्समवेते वा सन्निकर्षः, तयोर्द्रव्यग्रहणे सामर्थ्यविरहात् । चक्षुस्त्वङ्मनसाञ्च संयोगेन सार्धं तदुभयम् । श्रवसश्च समवायस्समवेतसमवायो वा । अथ चक्षुस्त्वचोस्संयुक्तसमवेतसमवाय एव सन्निकर्ष आस्तां, तेनैव त्र्यणुकादीनामध्यक्षतोपपत्तेः चक्षुरादिसंयुक्तपरमाणुसमवेते द्व्यणुके समवायसत्त्वादिति चेत् न, पार्थिवपरमाणुश्यामक्षिमनि रूपत्वादेः प्रत्यक्षापत्तिव्युदासाय संयोगे महत्त्वावच्छिन्नत्वस्यावश्यं निवेश्यतया परमाणौ संयोगस्य महत्त्वानवच्छिन्नत्वेन त्र्यणुकप्रत्यक्षानुपपत्तिप्रसङ्गात् । अतएव संयुक्तसमवायेन निर्वाहे संयोगस्य सन्निकर्षत्वं न प्रामाणिकमिति परास्तम् परमाणौ सत्त्वादेस्साक्षात्कारवारणायात्रापि संयोगे महत्त्वावच्छिन्नत्वस्य विशेषणीयत्वेनोक्तानुपपत्तेस्तादवस्थ्यात् । एवं त्र्यणुकगुणप्रत्यक्षसम्पत्तये संयोगस्यापि सन्निकर्षत्वमावश्यकम् अत्रेदमवधेयम् पृष्ठदेशावच्छेदमालोकेन संयुक्तस्य घटादेस्तत्र च रूपप्रभृतेस्तत्र च रूपत्वादेस्साक्षात्कारवारणाय चक्षुस्संयोगेषु आलोकसंयोगावच्छिन्नत्वं चक्षुषि सत्त्वादेस्तदीयरूपादौ च रूपत्वादेः प्रत्यक्षनिरासायोभयत्र संयुक्तघटकसंयोगे उद्भूतरूपावच्छिन्नत्वं, विवक्षणीयमिति । विशेषणता च स्वरूपसम्बन्धेन गर्भिता निरूपकतया प्रतियोगिनमाश्रयतयानुयोगिनमध्यासमाना संयुक्ते तत्समवेतादौ च ग्राह्या । एतेनानुपलब्धेरनुमितिव्यापारिकाया मीमांसकानुमतं प्रमाणान्तरत्वं प्रत्याख्यातं वेदितव्यम्, ते हि संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवाय इतिसन्निकर्षत्रयमेव मन्यन्ते नचैतन्मते शब्दस्य तत्त्वादेश्च साक्षात्कारो न स्यादिति वाच्यम् शब्दे प्रत्यक्षद्रव्यगुणत्वाभावविशिष्टप्रत्यक्षेण गुणत्वाभावसिद्धौ क्रियावेगाश्रयत्वेन द्रव्यत्वानुमानात् श्रुत्या संयोगसम्भवेन तदुपपत्तेः । विशेषणताया एकमात्राश्रिततया सम्बन्धत्वोपगमो नैव शक्येत कर्तुमिति परेषामभिप्रायः । वेदान्तिनस्तु संयोगः संयुक्ततादात्म्यं संयुक्तान्यतादात्म्यमिति त्रिविधं

सन्निकर्षमुपयन्ति तच्च द्रव्यगुणादीनामान्यन्तिकभेदव्यवस्थापना-दुपेक्षणीयम्। न च योग्यानुपलब्धेरप्रमाणत्वे पिशाचाद्यतीन्द्रिया-भावप्रत्यक्षापत्तिः तस्या ज्ञातत्वाज्ञातत्वविकल्पासहत्वेनातथात्वेऽपि स्वरूपसत्या इन्द्रियसहकारित्वाभ्युपगमात्। केचित्तु योग्यप्रतियो-गिकत्वस्यात्यन्ताभाववृत्तिविषयतया प्रत्यक्षे कारणत्वमिति नोक्ता-पत्तिः। प्रौढतमे तमसि घटाभावस्य चाक्षुषमालोकसंयोगविरहा-दापादयितुमशक्यमित्याहुः। अथ रसनान्येन चक्षुरादिना रसादेस्तदन्येन रसनादिना रूपादेर्गुरुत्वस्य च तैश्चेतसा चादृष्टादेः कुतो नाध्यक्षं सन्निकर्षसत्त्वादिति चेत्, मैवम् तत्तदिन्द्रियसन्निकर्ष-प्रयोज्यविषयतासम्बन्धेन प्रत्यक्षे रसत्वादिना, विषयतया योगिवृ-त्त्यन्यप्रत्यक्षे च गुरुत्वत्वादिना विरोधित्वकल्पनात्। नचैवमपि निर्विकल्पकज्ञानस्य प्रत्यक्षवारणं दुश्शक्यं, ज्ञानवृत्तिविषयतया तादृशप्रत्यक्षं प्रति प्रकारत्वस्य निरूपकत्वेन हेतुत्वं विशेष्यत्वादिक-मादाय विनिगमनाविरहप्रसङ्गभीत्याङ्गीकर्तुं नालं, निर्विकल्पकत्वस्य प्रकारत्वादिशून्यज्ञानस्वरूपतया तेन विरोधितोक्तप्रसङ्गेन विवक्षितु-मक्षमैव तत्तद्व्यक्तित्वेनापि सा गौरवोदयादनादरणीया. अतएव ज्ञानत्वेन विरोधित्वमभ्युपेत्य ज्ञानमात्रस्य ज्ञाततयाऽनुमेयत्वमेवेति सङ्गिरन्ते भट्टानुयायिन इति वाच्यम्, विलक्षणविषयत्वस्यैव निर्विकल्पकत्वात्मतया तस्यैव प्रतिबन्धकतावच्छेदकत्वाभिधाने बाधकाभावादिति संक्षेपः। तथाचेन्द्रियाणि विषयं प्राप्तवन्त्येव जनयन्ति साक्षात्कृतिं तेषाम् तृतीयाध्याये व्यवस्थापनात्, तत्र विषये स्वस्यैव गमनमिति नायनीतस्यैव स्वकीयस्थानान्तिके तदिति चैतरीरीतिः। एवञ्च निरुक्तसन्निकर्षान्यत-मसंसर्गावच्छिन्नेन्द्रियनिष्ठजनकतानिरूपितजन्यतावत्त्वे सत्यव्य-भिचारिज्ञानं प्रत्यक्षमिति पर्यवसितलक्षणं बोध्यम्। एतेनेन्द्रिय-जन्यत्वमेव लक्षणमस्तु कृतं सन्निकर्षपदेनेति समाहितं, जनकता-यामन्यतमसम्बन्धावच्छिन्नत्वलाभाय तदुपादानात्, नहीन्द्रियं सन्निकर्षाद्वारकमुत्पादयितुमर्हति साक्षात्कृतिम्। नाप्यर्थपदोपादानं विफलं, सन्निकर्षपदस्य संयोगादिपरत्वग्राहकत्वात्। अतएव "तज्जन्यत्वाज्ज्ञानमात्रेऽतिव्याप्तिरित्यग्रिमग्रन्थोऽपि सङ्गच्छते, अन्यथाऽर्थपदस्य तत्तज्ज्ञानविषयपरत्वे मनसाऽऽत्मसंयोगस्य स्वेत-रज्ञाने सन्निकर्षत्वविरहेण ज्ञानमात्रेऽतिव्याप्तिरप्रसक्तैव स्यात्।

प्रत्यक्षस्य लक्षणं चैतदुपलक्षणमिन्द्रियमनःसंयोगजन्यज्ञानत्वस्येति वार्तिककृत इति ॥

पृष्ठ ६ । पंक्तिः २६ ।

आत्मेति । यथा चात्ममनसोर्निरवयवयोरपि संयोगस्तथाऽवयविव्यवस्थावसरे वक्ष्यते । भावकार्येषु ससमवायिकारणकत्वस्येव सासमवायिकारणकत्वस्यापि नियमादात्ममनस्संयोगस्य सुखादावसमवायिकारणत्वमभ्युपेयम्, न चात्मनोऽन्येन संयोगस्तथा, सुखसाक्षात्कारासमवायिकारणत्वस्य त्वात्ममनस्संयोग एवाङ्गीकरणीयत्वेन कल्पनागौरवात् ।

पृष्ठ । ६ पंक्तिः २७ ।

ज्ञानमात्र इति । जन्यज्ञानमात्र इत्यर्थः । ननु जनकतायामिन्द्रियत्वावच्छिन्नत्वस्य जन्यतायां वा विषयत्वसम्बन्धावच्छिन्नत्वस्य विवक्षायां नैव दोषस्योन्मेषः । नन्वेवं ज्ञानपदवैयर्थ्यमुक्तलक्षणे तात्पर्यग्राहकत्वादित्यत आह, ईश्वरप्रत्यक्ष इति । तच्च धर्मिग्राहकप्रमाणसिद्धम् तादृशं प्रमाणञ्च जन्यं स्वोपादानगोचरापरोक्षज्ञानादिमज्जन्यं जन्यत्वादित्यनुमानमिति । अथ विधीयमानस्य प्रत्यक्षप्रमाणघटकप्रमालक्षणस्येश्वरीयप्रत्यक्षासाधारण्येऽपि न क्षतिरिति चेत्, न एवमप्यलौकिकप्रत्यक्षाव्याप्तेः प्रत्याख्यातुमशक्यत्वात् लक्षितलक्ष्यमेव लौकिकप्रत्यक्षस्यैव तथात्वादिति युज्यते निराकर्तुम् । तदीयलक्षणानभिधानेन न्यूनतापत्तेः । यत्तु सन्निकर्षपदेन सामान्यलक्षणादयोऽप्यलौकिकसन्निकर्षाश्शक्यन्त एव परिग्रहीतुमित्यन्यतमेतेषां निवेशान्नानुपपत्तिरिति, तत्र निरुक्तेष्वाद्ययोः कथञ्चिदिन्द्रियसम्बन्धत्वोपपादनस्य शक्यत्वेपि चरमेऽथेन्द्रियसम्बन्धत्वव्यवस्थापनासम्भवात् । ननु योगिनां मानसमेव भवति प्रत्यक्षं निश्शेषविषयाणां, तत्र स्वसंयोगजन्यस्वसंयोगिसमवेतो येन केनचित्समानकालिकत्वादिना विषयेषु वर्तमानो विजातीयधर्म एव श्रुत्यादिसात्त्विकः प्रत्यासत्तिः, द्वितीयालौकिकप्रत्यक्षस्थलेऽपि मनोमानस्य स्वजन्यं विषयतया विषयं सम्बध्यमानं ज्ञानमेव प्रत्यासत्तिरिति नोक्तानुपपत्तिरिति चेत्, सत्यम् । उच्यते स्वप्रौढिप्रकटयिष्यतेश्वरप्रत्यक्षस्य लक्ष्यत्वमभ्युपगम्य प्रत्यपादि तत्राव्याप्तिरिति ॥ साक्षात्करोमीति । विषयस्य विषयतावच्छेदकस्य वैकता-

मन्तरेण नानुगताकारता भवति प्रत्ययस्येति सर्वानुगतं साक्षात्त्वं साक्षात्करोमीत्यनुवृत्तप्रत्ययेन सिद्धिमासादयदेकव्यक्तिमात्रवृत्तित्वादीनां जातित्वबाधकानां केनाप्यनाश्रीयमाणं जातिरूपतां लभते। न च सन्देह्मीति निश्चिनोमीति चानुव्यवसायेन यथा विषयताविशेषात्मकं संशयत्वं साध्यते तथैव साक्षात्करोमीत्यनुव्यवसायेन साक्षात्त्वं साधयितुमुचितमिति साम्प्रतम्, संशयत्वादीनामव्याप्यवृत्तितया जातित्वस्य विरोधानवगाहिज्ञानसाधारणतया च विरोधघटितत्वस्य वक्तुमशक्यत्वेनानायत्या पदार्थान्तरभूतविषयताविशेषात्मकत्वमुपेयते, प्रकृते तु साक्षात्त्वस्य व्याप्यवृत्तित्वेन बाधकानाक्रान्ततया जातावन्तर्भावसम्भवेनातिरिक्तविषयतात्वकत्वकल्पने गौरवमिति भावः। केचित्तु इन्द्रियजन्यतावच्छेदकतया साक्षात्त्वजातिमनुमिन्वन्ति, तन्मन्दम् तस्य नित्यवृत्तितयोक्तावच्छेदकत्वासम्भवात्।

पृष्ठे ७। पंक्तिः १।

अथ साक्षात्करोमीति प्रतीतिसाक्षिकस्य साक्षात्त्वसामान्यस्येश्वरज्ञानसाधारण्ये मानाभावः तस्यातीन्द्रियत्वेनोक्तप्रतीत्या गोचरयितुमशक्यत्वात्। किञ्चालौकिकप्रत्यक्षेऽपि यथाभिहितसामान्यस्य सद्भावे प्रमाणविरहः, न हि किलैकस्मिन् घटे चक्षुरादिना सन्निकृष्टे जायमानस्य ज्ञानस्य घटत्वेनाशेषघटं साक्षात्करोमीति, चन्दनखण्डे सौरभोपनयानन्तरं तत्र सौरभं साक्षात्करोमीति चानुभवो जनानाम् तथा चोभयत्राव्याप्तिरत आह, यद्वेति। सावधारणमिति। एवकारार्थगर्भितार्थकमित्यर्थः। उत्पन्नपदस्य सावधारणत्वे परमेश्वरज्ञानासंग्रह इति सन्निकर्षपदस्य तथात्वमभ्युपेत्य लक्षणं स्फुटयति इन्द्रियार्थेत्यादि॥

पृष्ठे ७। पंक्तिः २।

नन्वेवमप्यसम्भवः, जन्यप्रत्यक्षमात्रस्य महत्त्वादिकारणकत्वादत आह, अतिरिक्तमिति। अनुत्पन्नत्वप्रतियोगितया ज्ञानस्य विलक्षणेऽतिरिक्तान्तस्य वैयर्थ्यमव्यावर्तकत्वादतस्तत्परित्यज्य लक्षणं परिष्कुरुते, तेनेति। ज्ञानाकरणकमिति। एतेन ज्ञानाजन्यत्वनिवेशे सविकल्पकज्ञानस्य निर्विकल्पकज्ञानजन्यतयाऽसङ्ग्रह इति पूर्वपक्षो निरस्तः तज्जन्यत्वेऽपि तदकरणकत्वस्यानपायात्। यद्यपि

# अकारादिक्रमेण सूत्रसूची ।

## ( अ )

## ( आ )

( इ )



( ई )



( उ )

( ऋ )



( ए )



( ऐ )



( क )

( ग )



( घ )



( च )



( ज )



( त )

## ( द )

( ध )



( न )

( प )

( ब )

( भ )



म



य

व

( श )

( स )

## ( ह )

